# ॥ योगदृष्टिसमुच्चयः ॥

# THE
# YOGADRASHTI SAMUCHCHAYA.

कर्ता—

श्रीमान्हरिभद्रसूरि.

BY

SHRIMAN HARIBHADRASURI

Edited BY

Prof L Suali, Ph D

Rs 0-3-0

श्रेष्ठि-देवचन्द्र-लालभाई-जैनपुस्तकोद्धारे-ग्रन्थाङ्कः १२

पटुतमबोधलोचनश्रीमद्धरिभद्रसूरिविहितो

# ॥ योगदृष्टिसमुच्चयः ॥

( स्वोपज्ञवृत्तियुत )

---

संशोधकः-इटालीनीवृदन्तर्गत-पावीयावास्तव्य

## प्रोफेसर एल सुएली डी पी एच

---

प्रकाशक -देवचन्द्र लालभाई व्यवस्थापत्र-

कार्यवाहक-शाह नगीनभाई घेलाभाई

मुम्बय्याम्

---

वीराब्द २४३९ विक्रमाब्द १९६८ इसुवर्ष १९१२

अमदावाद सिटीप्रेस मुद्रणालये, चतुरलाल अमरतलाल इत्यनेन मुद्रितम्

प्रति ८७५

---

निष्क्रय ३ आणका

०-३-०

# PREFACE.

"Yoga-drishti-samuchchaya" is a work on the philosophy of Yoga written by one of the most eminent among the Jain writers of the past "Shri Haribhadra Suri" The commentary on it is also written by the author Another commentary (अवचूर्णि) on this work is written by "Shri Sadhuraja Gani," which we hope to bring out in course of time

Shri Haribhadra Suri is well-known as a writer of numerous works of great value and importance About sixty of his works are available at present No precise date can be assigned to his various works, but it is certain that the writer flourished in the sixth century of the Vikrama era We have been able ere this to publish Shoda Shaka by the same author, which forms the 'sixth" volume of this series and we hope to publish his other works as it suits us

We do not think it needful to say anything more regarding this work, as sufficient has been said about it in the introductions, written by Panyasa Shri Anandasagar, and Prof L Suali, Ph D, in Sanscrit, and in English respectively

In conclusion we take this opportunity to express our best thanks to Prof Suali for editing and writing introduction to this work, as also for going through the proof-sheets, and we are also thankful to Panyasa Shri Anandasagar for writing his learned introduction in Sanscrit

This work is the "twelfth" of the series published by the Trust.

November 1912
325, Javeri Bazar
Bombay

**Naginbhai Ghelabhai,**
a trustee, for himself and
co trustees

# ॥ योगदृष्ट्युपोद्घातः ॥

॥ श्रीगणधरेन्द्राय वोभवतु नतिततयः ॥

अवधारयन्तु अनवधृतधिषणाधिगमाधरीकृतधिषणधिषणास्तत्र-भवन्तः शुभवन्तः सैद्रूप्यं प्रकरणमेतदुपदीक्रियमाणममानमानोन्मानवितरणचणमुद्वीक्ष्याक्षताद्यन्तेक्षणीयं यदुत प्रणेतारोऽस्य स्याद्वादज्योतिष्पतिप्रभाप्रचयावाप्ताबाधबोध्यपदार्थप्रकरनतिहतानादिकालीनशुभेतरवासनाभिव्यञ्जकपशुत्वधागस्यगमाद्यनार्यकार्यकारणबद्धकक्षजैमिनीयाबाध्यमत्यक्षादिप्रमाणप्रचयप्रमितिप्रचेयप्रमेयसमुदयापङ्कवप्रचुरप्रेक्षाप्रसरश्रीव्यासादिमतगणाः श्रीश्वेताम्बरगणाग्रणीपदप्रतिष्ठिताः श्रीमन्तो हरिभद्रसूरयः। प्रादुर्भविष्यत्येव पर्यनुयोजकानां परमपदप्रदानपटूवप्याबाधबोधप्रेप्सूनामखिलाखिलबोधधुराधौरेयमान्या प्रश्नततिरस्मिन्यदुत कदा किमर्थं चाविर्भावो बोभूयाञ्चक्रेऽस्य ग्रन्थचक्रे?। तत्र प्रथमे तावत्पर्यनुयोगे–" पंचसए पणसीए, विक्कमकालाओ झत्ति अत्थमिओ। हरिभद्दसूरिसूरो, धम्मरओ देउ मुक्खसुहं" ५३। इतिविचारसारसारोदाहारात् स्पष्टं स्पष्टीभवति स्पष्टतमयथार्थेतिहासग्रन्थाभ्यासानां वैक्रमीये शतके षष्ठे सूरीणामज्ञानध्वान्ततति-तिरस्करणतरणीनां भूमण्डलभामिनीतिलकायिता सत्ता। ये चानवबुद्धसिद्धान्ततत्त्वाः संगिरन्ते यदुत न स्यात्तावन्मात्रेऽन्तराले सति व्यवस्थितागमव्यावर्णनं विस्तृततरं, सिद्धान्तपुस्तकारोहकालोऽपि यतः स एवेति भाव्यमनेहसाऽर्वाचीनेनेति, तदयुक्ततमता प्रतिभापथमापातिष्याति तदीयां चतुश्चत्वारिंशदधिकग्रन्थचतुर्दशशतीमवाप्तबोधैर्वार्धक्येऽपि विनिर्मितां प्रायश्चित्तरूपतया स्वीकृतां कृतधीविषयविषयां विलोककानां विवेचकानां, व्यक्तं विशुद्धव्यक्तीनां सामर्थ्यप्रतिभानं तत्र, तथाच

नोक्ताशङ्काकणिकापि, अन्यच्च पुस्तकव्यवस्थाया व्यवस्थया विद्वद्भिः सम्भूय भूयो भव्यभव्यावबोधनिबन्धनबन्धुरतोद्बोधनेन प्रतिष्ठितत्वाच्च तत्काले लोकोक्तिप्रसारवन्नवीनकृतिरथातिरद्भात त्राणकारी तेषा यथायथ । तत्त्वार्थसारकतत्त्वार्थवृत्तिकृत्सिद्धसेनगणीना वचनततिमुप-जीव्य श्रीमन्त साधु साधितसत्ता या इति तत्त्वोक्तमा. स्पष्टतमपि-त्यपि न विचारचणचर्चणीय, यत " तथाचाह महामति " इत्यादि-वाक्यवृन्देन वर्णितो महामति सिद्धसेनदिवाकरो यथार्थाभिधानः कुविकल्पनिबन्धनछायाछेदनच्छेकशतसहस्रग्रन्थग्रथनावबोधतमस्त्वयत्रष्ट-ध्वान्तःकरणविकासकरणकोविदतमत्वाद्, यतो दरीदृश्यन्त एव पूज्यपादवर्णितानां "प्रसिद्धाना प्रमाणाना" इत्यादीना वचनवृन्दाना श्रीमद्दिवाकरपादप्रणीतेष्वेव न्यायावतारादिषु मूलत आविर्भावा । श्रीमत्सिद्धसेनगणयस्तु द्वितीया यायवृत्तौ सञ्ज्ञा व्याख्यायन्तो व्याख्या-मुपवर्णितवन्तः श्रीनन्दीसूत्रीया हारिभद्रा, तथाच द्वयेषा श्रीमद्दिवाकरगणिपदोपाधीना सूरीणा पार्थक्यविलोकने स्पष्ट प्रतिभास्यति श्रीमता तत्कालीनत्व । यत्र श्रीमत्सिद्धर्षिसमकालीनतामाकलय्य स्वान्तेन वस्तवानधाम्ना प्रतिपाद्यते तेषामर्वाचीनता " आचार्यहरिभद्रो मे, धर्मबोधकरो गुरु " इतिभवप्रपञ्चप्रपञ्चनपटूपमितभवप्रपञ्चाकथामालम्ब्यमानेन, तदपि पूर्वापरविचारशून्यमेव, यतो वक्ति महात्मासौ स्वय " अनागत परिज्ञाय " इति । तथा च नैते समकालीना द्वये । नच वाच्यमेतत् यदुत गुरुशिष्यादिव्यवहारो नासमकालीन इति । यतो व्यवहारविशेषाणा विशेषतया व्यवहारात् । नचात्र व्यवहारव्या-हृतिरस्ति, किन्तु स्वातात्मन उपकारित्वमदृश्येनापि विहित महात्मना । नच विवाद स्वयख्यातरि लब्धख्यातौ ख्यातरि । तथा चोपमितिभवप्रपञ्चीय. प्रथम. प्रस्ताव. " ये च मम सद्धुपदेशदायिनो

भगवन्तः सूरयस्ते विशिष्टज्ञाना एव, यतः कालव्यवहितैरनागतमेव तैर्ज्ञातः समस्तोऽपि मदीयवृत्तान्तः, स्वसंवेदनसंसिद्धमेतदस्माकमिति ”

“ देशकालव्यवहितानामपि जन्तूनां छद्मस्थावस्थायामपि वर्त्तमानाः ”

तथाच निर्विवादं विद्वद्वृन्दवेद्यं निर्णयमेनमातिष्ठामहे यन्नेते पूज्यपादाः श्रीमतः सिद्धसेनगणेरर्वाचीनाः सिद्धर्षेः समकालीनाश्च; किन्तु प्राचीनाः पूर्वोक्तग्रन्थसंमतगरवृत्तवार्त्तशरीरवृत्तयः। अत एव च “कतिपयप्रवचनार्थतारतारकविशेषानुपदिदर्शयिषुः ” इति श्रीमदभयदेवप्रभूक्तं पञ्चाशकीयं वाक्यं क्राम्यति मतिमतां मनसि, नेदीयस्त्वात्पूर्वविच्छेदस्य केषाञ्चित्तदर्थानां तैरवधारणाद्धेतोः । अपि चात एवोदीरितं “पटुतमबोधलोचनतया” इति, तथा च प्रभुप्रभविष्णुवदनमलयनिसृतानां प्रकरणसुगन्धीनां कुतः प्रादुर्भावो वरीवर्त्तमानवीतरागागमाम्बरे तथाविधवचनव्रजानवलोकनादिति कल्पितं कूटकल्पनाकल्पनकोविदैः कुट्टितं निष्टङ्कनीयं। प्रयोजनं सामान्यतो विदितं लोकरूढितत्प्रभावलब्धप्रभवग्रन्थविशेष ‘ सिद्धान्तसारादि ’ विलोकनतः प्रायश्चित्तस्य प्रतिपत्तिः पञ्चेन्द्रियप्रचयपराङ्मुकरणकल्पनाकर्त्तनदीष्णुः, तथापि व्यक्तं

“आत्मानुस्मरणाय च” (२०५) ‘अतः परोपकारोऽपि’ (२०६) इति समालोकनात् लोककानामात्मान्योपकार इति प्रतिभापथमागमिष्यति । अभिधेयनिर्णये तु यद्यप्यन्यैः “ योगश्चित्तवृत्तिनिरोधः ” (पा १-२) इति लक्षितं, तथापि शून्यतायां मूर्छिताद्यनेकावस्थाया-

मपि तथाभावादन्यथापि च "तदा द्रष्टुः स्वरूपेऽवस्थान" (पा० १३) इति फलानुकूल्याभावाद्विक्षण लक्षित लक्षणैकचक्षुष्कै प्रभुभिर्भावसार " मोक्षयोजनभावेन " (११) इति वाक्येन तादृग्मोक्षानुकूलचेष्टा-मात्रस्य योगलक्षणलक्ष्यत्व । तथाच को भेदो भवता गुप्तेर्योगस्येति निरस्ततरा । एषैव चेच्छाशास्त्रसामर्थ्यपर्यन्तानुभावनधौरेयी धारणा ऽन्यथा सामर्थ्यस्य व्याघातादित्यल प्रसक्तानुप्रसक्तेन । अत्राभिधेयस्य योगस्य बालबोधानुसारी विभागश्चिकीर्षित इति प्रथम "मित्रा तारा बला दीप्रा स्थिरा कान्ता प्रभापरा" इति नामत उद्दिश्य दृष्टयोऽष्टौ तत्स्वरूप तत्त्यो बोध खेदादिदोषापनोदोऽद्वेषादिगुणप्राप्तिश्च यथा-यथ निष्टङ्किता । विपश्चिद्भिज्ञानवेत्र चात्र सञ्चारित चारित्रचञ्चिमाधारै योगबीजानि, शिष्टानुसारिता, अवञ्चकयोगत्रय, अवेद्यसवेद्यपद, भवाभिनन्दिलक्षणानि, कुतर्कनैरर्थक्य, शास्त्रप्राधान्य, सर्वज्ञमताभेदः, प्राणिवैचित्र्यनिबन्धनदेशनावैचित्र्य इत्याद्या चतुर्थी दृष्टः, आक्षेपक-ज्ञान, भवव्याधिक्षयः, नित्यानित्यैकान्तनिरास, गोत्रकुलप्रवृत्तचक्रयो-गस्वरूप, इच्छाप्रवृत्तिस्थिरसिद्धियमस्वरूप, इत्यादि चासमाप्ते । सपादित चैव श्रीमद्भिर्मोक्षमभिलाषुकाना गुणस्थानवृन्दमिव विचार-णीयतम योगाङ्गाढिकापनावर्ता दृष्टयष्टक क्रमभावि । तथाचास्य वितते वावश्यकी मुद्रणेति आर म्भमेतन्मुद्रापयितु इटालयाह्वविषयनिवासिना विद्वद्वर्येण सुएलीत्याह्वानेन, चिरतर चैतदेव यदुत न यत्र तादृशो भा-षाध्यापका तद्भाषाप्रचुरपुस्तकप्राप्तिस्तत्परिचयश्च धर्मश्चान्य एव बाह्य-दृष्ट्या तथापि प्रस्तुतप्रकरणे तेन परिश्रम. मार भ्य , समाप्त न निर्वतन. । मुद्रण तु गौर्जरीयसुरतपत्तनाभिजनश्रेष्ठिवर्यदेवचन्द्रलालभ्रातनियुक्त-पुस्तकोद्धारमात्रोपयोगिलक्षद्रम्मव्यवस्थापत्रानियमितकुसीदव्ययव्यव-स्थाकारकश्रेष्ठि-नगीनभ्रातृभिरनुष्ठित । प्रान्ते प्रार्थये विगतप्रार्थना-र्थान् सज्जनान्मान्यतमान् इद यदुत ग्रन्थकृता शोधकस्य मुद्रापकस्य

च चरितं चित्ते निचीय सफलीकार्या कृतिस्तेषां यथावदाद्यन्ताव-लोकनेन तदुक्तानुशीलनेन च यथाशक्तीति सज्जनमनोऽनुसारिसरल-सरण्यनुगन्तानन्दोदन्वान् ।

स्तम्भपार्श्वप्रभोः पादैर्भव्येच्छाकल्पशाखिभिः ।
समृद्धे स्तम्भतीर्थेऽयमुपोद्घात उपस्कृतः ॥१॥
वसुरसनन्दनिशेशप्रमिते भाद्रेऽसितत्रयोदश्याम् ।
आनन्देनानन्दे, यथार्थवार्त्तः समो ह्यपः ॥ २ ॥

# योगदृष्टिसमुच्चयः ।

॥ नमो जिनाय[1] ॥

योगतन्त्रप्रत्यासन्नभूतस्य योगदृष्टिसमुच्चयस्य व्याख्या प्रारभ्यते। इह चादावेवाचार्यः[2] शिष्टसमयप्रतिपालनाय विघ्नविनायकोपशान्तये प्रयोजनादिप्रतिपादनार्थं श्लोकसूत्रमुपन्यस्तवान्–

नत्वेच्छायोगतोऽयोगं योगिगम्यं जिनोत्तमम् ।
वीरं वक्ष्ये[3] समासेन योगं तद्दृष्टिभेदतः ॥ १ ॥

इति ॥ तत्र शिष्टानामयं समयो यदुत "शिष्टाः क्वचिदिष्टे वस्तुनि प्रवर्तमानाः सन्त इष्टदेवतानमस्कारपूर्वकं प्रवर्तन्ते"। अयमप्याचार्यो न हि न शिष्ट इति, अतस्तत्समयप्रतिपालनाय। तथा चोक्तम्–

शिष्टानामेष समयस्ते सर्वत्र शुभे किल[4] ।
[5]प्रवर्तन्ते सदेवेष्टदेवतास्तवपूर्वकम् ॥ इत्यादि ॥

तथा "श्रेयांसि बहुविघ्नानि भवन्ति" इत्युक्तं च[6]–

श्रेयांसि बहुविघ्नानि भवन्ति महतामपि ।

---

१ C adds नमः

२ C इहैवादावेवाचार्य

३ C वक्षे

४ AD कर्मणि

५ A D premit किल

६ C omits from श्रेयांसि down to नं

अश्रेयसि प्रवृत्तानां क्कापि यान्ति विनायकाः ॥ इति ॥

इदं प्रकरणं तु सम्यग्ज्ञानहेतुत्वाच्छ्रेयोभूतम् । अतो मा भूद्विघ्न इति विघ्नविनायकोपशान्तये । तथा प्रेक्षावतां प्रवृत्त्यर्थं प्रयोजनादिप्रतिपादनार्थं च । तथा चोक्तम्–

सर्वस्यैव शास्त्रस्य कर्मणो वापि कस्यचित् ।
यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते ॥
न चाप्यविषयस्येह[1] शक्यं वक्तुं प्रयोजनम् ।
काकदन्तपरीक्षादेस्तत्प्रयोगाप्रसिद्धितः[2] ॥
अस्येदं फलमित्येवं[3] योगः संवन्ध उच्यते ।
तदुक्त्यन्तर्गतत्वेन न पृथक्कैश्चिदिष्यते ॥ इत्यादि ॥

तत्र
" नत्वेच्छायोगतोऽयोगं योगिगम्यं जिनोत्तमम् ।
वीरं[4] "

इत्यनेनेष्टदेवतास्तवमाह;

" वक्ष्ये समासेन योगं तद्दृष्टिभेदतः "

इत्यनेन तु प्रयोजनादित्रयमिति श्लोकसूत्रसमुदायार्थः ॥ अवयवार्थस्तु " नत्वा " प्रणम्य " वीरं " इति योगः । कथमित्याह " इच्छायोगतः " इति । क्रियाविशेषणमाह । इच्छायोगेन । शास्त्रयोगसामर्थ्ययोगव्यवच्छेदार्थमेतत् । इष्टव्यवच्छेदश्चायं तदनधिकारित्वेन प्रकरणारम्भे[5] मृषावादपरिहारेण सर्वत्रौचित्यारम्भप्रवृत्तिप्रदर्शनार्थः । एतेषां[6] च त्रयाणामपि योगानां स्वरूपमनन्तरमेव वक्ष्यति । किंवि-

---

१ D चाप्यर्थविषयस्येह
२ A ०प्रसिद्धतः
३ D ०त्येव
४ A D श्रीवीरं
५ A प्रकरणकारस्येष्ट
६ A एषां

शिष्टं वीरमित्याह "जिनोत्तम" इति वस्तुविशेषणम् । इह रागादिजेतृत्वात्सर्व एव विशिष्टश्रुतधरादयो जिना उच्यन्ते । तद्यथा । श्रुतजिना, अवधिजिना, मनःपर्यायज्ञानजिनाः केवलिजिनाश्च । तेषामुत्तमः केवलित्वात्तीर्थंकरत्वाच्च । अनेन भगवतस्तथाभव्यत्वाक्षिप्तवरबोधिलाभगर्भार्हद्वात्सल्योपात्तानुत्तरपुण्यस्कन्धरूपतीर्थकरनामकर्मविपाकफलरूपा परपरार्थसंपादनी कर्मकायावस्थामाह । अयमेव विशिष्यते "अयोग" इति । कायवाङ्मनःकर्म योगः, अविद्यमानयोगोऽयोगः, तम् । अनेन च भगवतः शैलेश्यवस्थोत्तरकालभाविनीं समस्तकर्मापगमरूपां तथाभव्यत्वपरिक्षयोद्भूतपरमज्ञानसुखलक्षणां कृतकृत्यतया निष्ठितार्थां परमफलरूपां तत्त्वकायावस्थामिति । अत एवाह "योगिगम्य" इति । योगिनां गम्यो योगिगम्यः, तम् । योगिनोऽत्र श्रुतजिनादयो गृह्यन्ते । अनेनापि भगवतोऽयोगिभिः प्राद्दष्टिगम्यत्वव्यवच्छेदमाह । एतज्जिज्ञासाया अपि चरमयथाप्रवृत्तकरणभावित्वात्,[१] अन्यदा तदनुपपत्तिरिति । "वीर" इति चान्वर्थसंज्ञेयं, महावीर्यविराजनात्तपःकर्मविदारणेन कषायादिशत्रुजयात्केवलश्रीस्वयंग्रहणेन[२] विक्रान्तो वीरः, तम् । इत्यमनेन यथाभूतान्यासाधारणगुणोत्कीर्तनरूपत्वाद्भावस्तवरूपेष्टदेवतास्तवमाहेति[३] । इष्टत्वं च गुणतो गुणप्रकर्षरूपत्वाद्भगवतः, देवतात्वं च परमगतित्वात्स्यादिति । "वक्ष्ये समासेन योगं तद्दृष्टिभेदतः" इत्यनेन तु[४] प्रयोजनादित्रयमाह । कथमित्युच्यते "वक्ष्ये" अभिधास्ये "योग" मित्यादिलक्षणं, "समासेन" संक्षेपेण, विस्तरेण तु पूर्वाचार्यैरेवायमुक्तोऽप्युत्तरा ययनयोगनिर्णयादिषु,

---

१ A C ०यथाप्रवृत्ति०

२ B ०श्रीस्वयग्रहणेन

३ B ०द्भावस्तवरूपस्येष्टदेवता० । C ०द्भावस्तवरूपस्येष्टदेवता०

४ A omits

"तद्दृष्टिभेदतः" इति योगदृष्टिभेदेन । तदत्र समासतो योगाभिधानं कर्तुरनन्तरं[1] प्रयोजनम् । परंपराप्रयोजनं[2] तु निर्वाणमेव, शुद्धाशयतस्तथा सत्त्वहितप्रवृत्तेरस्याश्चावन्ध्यनिर्वाणबीजत्वादिति। अभिधेयं योग एव। साध्यसाधनलक्षणः संबन्ध इति क्षुण्णो ऽयं मार्गः। श्रोतॄणां त्वनन्तरप्रयोजनं प्रकरणार्थपरिज्ञानं, परंपराप्रयोजनं त्वमीषामपि निर्वाणमेव, प्रकरणार्थपरिज्ञानादौचित्येनात्रैव प्रवृत्तेरस्याश्चाप्यवन्ध्यनिर्वाणबीजत्वादिति ॥

एवं संपादितेष्टदेवतास्तवप्रयोजनाद्यभिधाय[3] प्रकरणोपकारकं प्रासङ्गिकमभिधातुमाह—

**इहैवेच्छादियोगानां स्वरूपमभिधीयते ।**
**योगिनामुपकाराय व्यक्तं योगप्रसङ्गतः ॥ २ ॥**

"इहैव" इति प्रक्रमे । किमित्याह "इच्छादियोगानां" इति । इच्छायोगशास्त्रयोगसामर्थ्ययोगानाम् । किमतः। आह "स्वरूपमभिधीयते" इति स्वलक्षणमुच्यते । किमर्थमेतदित्याह "योगिनामुपकाराय" इति । योगिनोऽत्र कुलयोगिनः प्रवृत्तचक्रा गृह्यन्ते वक्ष्यमाणलक्षणाः, न निष्पन्नयोगा वक्ष्यमाणलक्षणा एव । तेषामत उपकाराभावात्, तदितरेषामेवोपकारार्थम् । उपकारश्चातो योगहृदयावबोधः कार्यमभिधीयत इत्याह "व्यक्तं" स्पष्टं न चाप्रस्तुतमप्येतदित्याह "योगप्रसङ्गतः" इति मित्रादियोगप्रसङ्गेन प्रसङ्गाख्यतन्त्रयुक्त्याक्षिप्तमित्यर्थः ॥

---

१ B C ०नन्तर०

२ C परंपरं प्र०

३ B C ०देवतास्तवः प्रयोजना०

इच्छायोगस्वरूपप्रतिपादनायाह[1]—

कर्तुमिच्छो श्रुतार्थस्य ज्ञानिनोऽपि प्रमादत ।
विकलो धर्मयोगो य स इच्छायोग उच्यते ॥ ३ ॥

कर्तुमिच्छो. कस्यचिन्निर्व्याजमेव तथाविधक्षयोपशमभावेन । अयमेव विशिष्यते । किंविशिष्टस्यास्य[2] चिकीर्षा· "श्रुतार्थस्य" श्रुतागमस्य, अर्थशब्दस्यागमवचनत्वात्[3], अ· र्यतेऽनेन तत्त्व इति कृत्वा । अयमपि कदाचिदज्ञान्येव भवति, क्षयोपशमवैचित्र्यात् । अत आह "ज्ञानिनोऽपि" अवगतानुष्ठेयतत्त्वार्थस्यापीति योऽर्थ । एवभूतस्यापि सत· किमित्याह "प्रमादत." प्रमादेन विकथादिना "विकल" असम्पूर्ण कालादिवैकल्यमाश्रित्य "धर्मयोग·" धर्मव्यापार· "य·" इति वन्दनादिविषय· "स इच्छायोग उच्यते" इच्छाप्रधानत्व चास्य तथाकालादावपि करणादिति ॥

शास्त्रयोगस्वरूपाभिधित्सयाह—

शास्त्रयोगस्त्विह ज्ञेयो यथाशक्त्यप्रमादिन[4] ।
श्राद्धस्य तीव्रबोधेन[5] वचसाविकलस्तथा ॥ ४ ॥

"शास्त्रयोगस्तु" इति । शास्त्रप्रधानो योग शास्त्रयोगः मक्रमा द्धर्मव्यापार एव । स पुन "इह" योगतन्त्रे विज्ञेय· । कस्य

१ A omits आह
२ D किंलक्षणस्यास्य
३ A ०वचनता BC अर्थशब्द आगमवचन
४ A ०प्रमादन्त· C यथाशक्त्या०
५ C तीव्रयोगेन

कीदृगित्याह " यथाशक्ति " शक्त्यनुरूपं " अप्रमादिनः " विकथादिप्रमादरहितस्य । अयमेव विशिष्यते " श्राद्धस्य " तथाविधमोहापगमात्संप्रत्ययाभिरुच्यादिश्रद्धावतः " तीव्रबोधेन " पटुबोधेन हेतुभूतेन " वचसा " आगमेन " अविकलः " अखण्डः, तथाकालादिवैकल्याबाधया; न त्वपटबोऽतिचारदोषज्ञ इति ॥

सामर्थ्ययोगलक्षणमाह—

शास्त्रसंदर्शितोपायस्तदतिक्रान्तगोचरः ।
शक्त्युद्रेकाद्विशेषेण सामर्थ्याख्योऽयमुत्तमः ॥ ५ ॥

" शास्त्रसंदर्शितोपायः " इति सामान्येन शास्त्राभिहितोपायः, सामान्येन शास्त्रे तदभिधानात् । " तदतिक्रान्तगोचरः " इति शास्त्रातिक्रान्तविषयः । कुत इत्याह " शक्त्युद्रेकात् " इति शक्तिप्राबल्यात् । " विशेषेण " इति न सामान्येन शास्त्रातिक्रान्तगोचरः, सामान्येन फलपर्यवसानत्वाच्छास्त्रस्य । " सामर्थ्याख्योऽयं " इति सामर्थ्ययोगाभिधानोऽयं योगः " उत्तमः " सर्वप्रधानः, तद्भावभावित्वात्, आक्षेपेण प्रधानफलकारणत्वादिति ॥

एतत्समर्थनायैवाह—

सिद्ध्याख्यपदसंप्राप्तिहेतुभेदा[1] न तत्त्वतः ।
शास्त्रादेवावगम्यन्ते सर्वथैवेह योगिभिः ॥ ६ ॥

सिद्ध्याख्यपदसंप्राप्तिहेतुभेदा[2] मोक्षाभिधानपदसंप्राप्तिकारणविशेषाः सम्यग्दर्शनादयः । किमित्याह " न तत्त्वतः " न तत्त्वभावेन

---

१ A सिद्धा०

२ A सिद्धा०

परमार्थतः "शास्त्रादेवावगम्यन्ते[1]"। न चैवमपि शास्त्रवैयर्थ्यमित्याह "सर्वथैवेह योगिभिः" इति सर्वैरेव प्रकारैरिह लोके साधुभिः, अनन्तभेदत्वात्तेषामिति ॥

सर्वथा तत्परिच्छेदे शास्त्रादेवाभ्युपगम्यमाने दोषमाह–

सर्वथा तत्परिच्छेदात्साक्षात्कारित्वयोगतः ।
तत्सर्वज्ञत्वसंसिद्धेस्तदा सिद्धिपदाप्तितः ॥ ७ ॥

सर्वथा सर्वैः प्रकारैराक्षेपफलसाधकत्वादिभिः । तत्परिच्छेदात् शास्त्रादेव सिद्ध्याख्यपदसम्प्राप्तिहेतुभेदपरिच्छेदात्[2] । किमित्याह "साक्षात्कारित्वयोगतः" केवलेनेव साक्षात्कारित्वेन योगात्कारणात्, "तत्सर्वज्ञत्वसंसिद्धेः" श्रोतृयोगिसर्वज्ञत्वसंसिद्धेः, अधिकृतहेतुभेदानामनेन सर्वथा परिच्छेदयोगात्[3]; ततश्च "तदा" श्रवणकाल एव "सिद्धिपदाप्तितः", मुक्तिपदाप्तेः, अयोगिकेवलित्वस्यापि शास्त्रादेव सद्भावावगतिप्रसङ्गादिति ॥

स्यादेतत् । अस्त्वेवमपि का नो बाधा, इत्यत्राह–

न चैतदेवं यत्तस्मात्प्रातिभज्ञानसंगतः ।
सामर्थ्ययोगोऽवाच्योऽस्ति सर्वज्ञत्वादिसाधनम् ॥८॥

न चैतदेवमन्यत्वगम्यते शास्त्रादयोगिकेवलित्वावगमेऽपि सिद्ध्यसिद्धेः[4] । यत एवं, तस्मात्प्रातिभज्ञानसंगतो मार्गानुसारिप्रकृष्टोहा-

---

१ BC शास्त्रान्यागमादेवावगम्यन्ते

२ A सिद्धा०

३ A परिच्छेदायोगात्

४ A सिद्ध-

रूपज्ञानयुक्तः । किमित्याह " सामर्थ्ययोगः " सामर्थ्यप्रधानो योगः सामर्थ्ययोगः प्रक्रमाद्धर्मव्यापार एव क्षपकश्रेणिगतो गृह्यते; अयं " अवाच्यो ऽस्ति " तद्योगिनो संवेदनसिद्धः " सर्वज्ञत्वादिसाधनं " आक्षेपेणातः सर्वज्ञत्वसिद्धेः । आह । इदमपि प्रातिभं श्रुतज्ञानमेव, अन्यथा षष्ठज्ञानप्रसङ्गः । न चैतत्केवलं, सामर्थ्ययोगकार्यत्वादस्य । एवं च सिद्ध्याख्यपदसंप्राप्तिहेतुभेदास्तत्त्वतः[1] शास्त्रादेवावगम्यन्त इति ॥

अत्रोच्यते । नैतच्छ्रुतं न केवलं न च ज्ञानान्तरमिति, रात्रि दिवारुणोदयवत् । अरुणोदयो हि न रात्रि दिवातिरिक्तो न च तयोरेकोऽपि वक्तुं पार्यते । एवं प्रातिभमप्येतन्न तदतिरिक्तं न च तयोरेकमपि वक्तुं शक्यते[2] । तत्काल एव तथोत्कृष्टक्षयोपशमवतो भावात् श्रुतत्वेन तत्त्वतोऽसंव्यवहार्यत्वान्न श्रुतं क्षायोपशमिकत्वादशेषद्रव्यपर्यायाविषयत्वान्न केवलमिति । उक्तं चैतत्तारकनिरीक्षणादिज्ञानशब्दवाच्यमपरैरपीत्यदोषः ॥

सामर्थ्ययोगभेदाभिधानायाह–

द्विधायं धर्मसंन्यासयोगसंन्याससंज्ञितः[3] ।
क्षायोपशमिका धर्मा योगाः कायादिकर्म तु ॥ ९ ॥

द्विधा द्विप्रकारो ऽयं सामर्थ्ययोगः । कथमित्याह " धर्मसंन्यासयोगसंन्याससंज्ञितः " इति । धर्मसंन्याससंज्ञा संजातास्येति धर्म-

---

१ A सिद्ध्याख्य०

२ D पार्यते

३ D धर्मसंन्यासो या०

सन्याससज्ञित' । "तारकादिभ्य इतच्[1]" । एव योगसन्याससज्ञा सजातास्येति योगसन्याससज्ञितः । सज्ञा चेह तत्रा सज्ञायत इति कृत्वा स तत्स्वरूपमेव गृह्यते । क एते धर्मा' के वा योगा इत्याह "क्षायोपशमिका धर्मा " क्षयोपशमनिवृत्ता. क्षान्त्यादय', " योगा. कायादिकर्म तु " योगा पुन' कायादिव्यापारा' कायोत्सर्गकरणादयः[2] ॥

एवमेव द्विधा सामर्थ्ययोग इति यो यदा भवति स तदाभिधातुमाह ।

द्वितीयापूर्वकरणे प्रथमस्तात्त्विको भवेत् ।
आयोज्यकरणादूर्ध्वं द्वितीय इति तद्विद ॥ १० ॥

द्वितीयापूर्वकरण इति ग्रन्थिभेदनिबन्धनप्रथमापूर्वकरणव्यवच्छेदार्थं द्वितीयग्रहण प्रथमेऽविकृतसामर्थ्ययोगासिद्धे । अपूर्वकरण स्वपूर्वपरिणाम शुभोऽनादावपि भवे तेषु धर्मस्थानेषु वर्तमानस्य तथा सजातपूर्वो ग्रन्थिभेदादिफल उच्यते । तत्र प्रथमेऽस्मिन् ग्रन्थिभेद फल, अय च सम्यग्दर्शनफल , सम्यग्दर्शन च प्रशमादिलिङ्ग आत्मपरिणाम' । यथोक्त " प्रशमसवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षण तत्त्वार्थश्रद्धान सम्यग्दर्शनं[3] "इति । यथाभावप्रयमुपन्यासो चास्य पश्चानुपूर्व्यति समयविद । द्वितीये त्वस्मिस्तथाविधधर्मस्थितेस्तथाविधसख्येयसागरोपमातिक्रमभाविनि त्रिमित्याह " प्रथमस्तात्त्विको भवेत् ' इति[4] । प्रथमो धर्मसन्याससज्ञित सामर्थ्ययोगस्तात्त्विक पारमार्थिको भवेत्, क्षपकश्रेणियोगिन क्षायोपशमिक-

---

[1] पाणिनि, ५, २, ३६

[2] D. ०कारणादय'

[3] Comp *Tattvarthadhigama* I, २, and the comm.

[4] D omits

क्षान्त्यादिधर्मनिवृत्तेः । अतोऽयमित्थमुपन्यास इति । अतात्त्विकस्तु प्रव्रज्याकालेऽपि भवति, प्रवृत्तिलक्षणधर्मसंन्यासायाः प्रव्रज्यायाः ज्ञानयोगप्रतिपत्तिरूपत्वात् । अत एवास्या[१] भवविरक्त एवाधिकार्युक्तः । यथोक्तं "अथ[२] प्रव्रज्यार्हः आर्यदेशोत्पन्नः, विशिष्टजातिकुलान्वितः क्षीणप्रायकर्ममलबुद्धिः[३] 'दुर्लभं मानुष्यं जन्ममरणनिमित्तं, संपदश्चपलाः, विषया दुःखहेतवः, संयोगो वियोगः, प्रतिक्षणं मरणं, दारुणो विपाकः' इत्यवगतसंसारनैर्गुण्यः[४], तत एव तद्विरक्तः, प्रतनुकषायः, अल्पहास्यादिः, कृतज्ञः, विनीतः, प्रागपि राजामात्यपौरजनबहुमतः, अद्रोहकारी, कल्याणाङ्गः, श्राद्धः[५], समुपसंपन्नश्च" इति । न ह्यनीदृशो ज्ञानयोगमाराधयति न चेदृशो नाराधयतीति भावनीयम् । सर्वज्ञवचनमागमः, तत्रायमनिरूपितार्थ इति "आयोज्यकरणादूर्ध्वं" इति केवलाभोगेनाचिन्त्यवीर्यतया योज्यं तथा तथा तत्कालक्षपणीयत्वेन भवोपग्राहिकर्मणस्तथावस्थानभावे कृतिरायोज्यकरणम् । शैलेश्यवस्थाफलमेतत् । अत एवाह "द्वितीय इति तद्विदः" योगसंन्याससंज्ञितः[६] सामर्थ्ययोग इति तद्विदोऽभिदधति शैलेश्यवस्थायामस्य भावात् । सर्वमिदमागमिकं वस्तु तथा चैतत्संवाद्यर्थम्—

---

१ A, marginal addition प्रव्रज्याः

२ The passage is quoted from Haribhadra's *Dharmabindu*, IV, 6, with some variations.

३ *Dharmabindu* reads क्षीणप्रायकर्ममलः, अत एव विमलबुद्धिः

४ C इत्येव गतं

५ *Dharmabindu* adds स्थिरः

६ B omits योगसंन्यासं तद्विदो

करण अहापवत्त अपुव्वमणियट्टिमेव भव्वाण ।
इयरेसिं पढम चिय भण्णइ करण ति परिणामो ॥ १ ॥
जा गण्ठी ता पढम गण्ठि समइच्छओ भवे बीय ।
अणियट्टीकरण पुण सम्मत्तपुरक्खडे जीवे ॥ २ ॥
गण्ठि त्ति सुदुब्भेओ कक्खडघणरूढगूढगण्ठि व्व ।
जीवस्स कम्मजणिओ घणरागद्दोसपरिणामो ॥ ३ ॥
एत्तो विवज्जओ खलु भिए यम्मि सम्मणाण तु ।
थोव पि सुपरिसुद्ध सचासम्मोहहेउ त्ति ॥ ४ ॥
सम्मत्तम्मि उ लद्धे पलियपुहत्तेण सावओ होइ ।
चरणोवसमखयाण सागरसखन्तरा होन्ति ॥ ५ ॥

इत्यादि लेशत. परिभावितार्थमेतत ॥ यत आयोज्यकरणात्पूर्व द्वितीय.,—

अतस्त्वयोगो योगाना योग पर उदाहृत ।
मोक्षयोजनभावेन सर्वसन्यासलक्षण ॥ ११ ॥

अत एव शैलेश्यवस्थाया योगसन्यासात्कारणात् । अयोगो योगाभाव । योगानां[1] मित्रादीनाम् । म य इति गम्यते । किमित्याह " योग' पर. "[2] प्रधान: " उदाहृत " इति । कथमित्याह "मोक्षयोजनभावेन " हेतुना योजनाद्योग इति कृत्वा स्वरूपमस्याह "सर्वसन्यासलक्षण " अधर्मधर्मस यासयोरप्यत्र परिशुद्धिभावादिति॥

एवमेतत्स्वरूपमभिधाय प्रकृतोपयोगमाह ।

---

१ A योगादीना
२ D omits

**एतत्त्रयमनाश्रित्य विशेषेणैतदुद्भवाः ।**
**योगदृष्टय उच्यन्ते अष्टौ सामान्यतस्तु ताः ॥११॥**

एतत्त्रयमिच्छायोगादिलक्षणमनाश्रित्यानङ्गीकृत्य विशेषेणास्मादियमित्येवंलक्षणेन । किमित्याह " एतदुद्भवाः । योगदृष्टय उच्यन्ते" मित्राद्याः " अष्टौ सामान्यतस्तु ताः " दृष्टय इति ॥

ताश्चेताः-

**मित्रा तारा बला दीप्रा स्थिरा कान्ता प्रभा परा**
**नामानि योगदृष्टीनां लक्षणं च निबोधत ॥ १३ ॥**

तत्र मित्रेव मित्रा तारेव तारेत्यादि यथार्थान्येव नामानि योगदृष्टीनाम् । लक्षणं चासां वक्ष्यमाणलक्षणं निबोधत शृणुतेत्यर्थः । इहौघदृष्टिव्यवच्छेदार्थं योगदृष्टिग्रहणमिति ॥

तामभिधातुमाह-

**समेघामेघरात्र्यादौ सग्रहाद्यर्भकादिवत् ।**
**ओघदृष्टिरिह ज्ञेया मिथ्यादृष्टीतराश्रया ॥ १४ ॥**

इहौघदृष्टिर्ज्ञानावरणीयादिकर्मक्षयोपशमवैचित्र्याच्चित्रा समेघामेघं च तद्रात्र्यादि च, आदिशब्दाद्दिवसपरिग्रहः, तस्मिन् । सग्रहादिश्चासौ अर्भकादिश्चेति विग्रहः । प्रथमादिशब्दादग्रहपरिग्रहः[1], द्वितीयादिशब्दादनर्भकपरिग्रहः । ओघदृष्टिः सामान्यदर्शनं भवाभिनन्दिसत्त्वविषया । मिथ्यादृष्टिश्चेतरश्च मिथ्यादृष्टीतरौ, तदाश्रया । काचाद्युपहतो मिथ्यादृष्टिः, तदनुपहतस्त्वितर इत्यक्षरगमनिका । भावार्थस्तु । एका समेघायां रात्रौ दृष्टिः किंचिन्मात्रग्राहिणी, अपरा त्वमेघायां मनागधिक-

---

[1] B omits परिग्रहः

तरयाहिणीति । आदिशब्दाद्विवसग्रह इति । तदेका समेत्रे द्विवसे तथापरामेघ इति । अस्ति चानयोर्विशेषः । इयमपि सग्रहस्य द्रष्टु, आदिशब्दादग्रहस्य च । भवत्यनयोरपि विशेष, चित्रविभ्रमादिभेदात् । इयमप्यर्भकस्य द्रष्टुः, आदिशब्दादनर्भकस्य च । अस्त्यनयोरपि भेदो विवेकवैकल्यादिभेदात् । इयमपि मिथ्यादृष्टे काचाद्युपहतलोचनस्य, इतरस्य तदनुपहतलोचनस्येति । यथैव दृष्टिभेद एकस्मिन्नपि दृश्ये चित्रोपाधिभेदात्, तथा पारलौकिकेऽपि प्रमेये क्षयोपशमवैचित्र्यतश्चित्र' प्रतिपत्तिभेद इति । एतन्निबन्धनो ऽय दर्शनभेद इति योगाचार्याः । न खल्वय स्थिरादिदृष्टिमता भिन्नग्रन्थीना योगिना यथाविषय नयाभेदावबोधभावादिति । प्रवृत्तिरप्यमीषा परार्थ शुद्धबोधभावेन विनिवृत्ताग्रहतया मैत्र्यादिपारतन्त्र्येण गम्भीरोदाराशयत्वात् चारिचरिकसजीवन्यचरकचारणनीत्येत्यल प्रसङ्गेन ॥

प्रकृत प्रस्तुम' । प्रकृता च मित्रादिभेदभिन्ना योगदृष्टि, इय चेत्थमष्टधेति निदर्शनमात्रमधिकृत्याह—

**तृणगोमयकाष्ठाग्निकणदीपप्रभोपमा ।**
**रत्नतारार्कचन्द्राभा सद्दृष्टेर्दृष्टिरष्टधा ॥ १५ ॥**

इहाधिकृतदृष्टिबोध खल्वयोक्त एव तृणाग्निकणाद्युदाहरणसाधर्म्यतो निरूप्यते । सामान्येन सद्दृष्टेर्योगिनो दृष्टिबोधलक्षणाष्टधा भवति । तृणाग्निकणोपमा मित्राया, गोमयाग्निकणोपमा ताराया, काष्ठाग्निकणोपमा बलाया, दीपप्रभोपमा दीप्रायाम् । तथाविधप्रकाशमात्रादिनेह साधर्म्यं यदाह मित्राया बोधस्तृणाग्निकणसदृशो भवति, न तत्त्वतोऽभीष्टकार्यक्षम, सम्यक्प्रयोगकाल यावदनवस्थानादल्पवीर्यतया पटुस्मृतिबीजसंस्काराधानानुपपत्ते, ततश्च विकलप्रयोगभावाद्भावतो वन्दनादिकार्यायोगादिति । ताराया तु बोधो गोमयाग्निक

णसदृशः । अयमप्येवंकल्प एव, तत्त्वतो विशिष्टस्थितिवीर्यविकलत्वात्, अतोऽपि प्रयोगकाले स्मृतिपाटवासिद्धेः, तदभावे प्रयोगवैकल्यात्, ततस्तथा तत्कार्याभावादिति । बलायामप्येष काष्ठाग्निकणकल्पो विशिष्ट ईषदुक्तबोधद्वयात्, तद्भवतोऽत्र मनाक् स्थितिवीर्ये, अतः पटुप्राया स्मृतिरिह प्रयोगसमये तद्भावे चार्थप्रयोगमात्रप्रीत्या यत्नलेशभावादिति । दीप्रायां त्वेष दीपप्रभातुल्यो विशिष्टतर उक्तबोधत्रयात्, अतोऽत्रोदग्रे स्थितिवीर्ये तत्पट्व्यपि प्रयोगसमये स्मृतिः । एवं भावतोऽप्यत्र द्रव्यप्रयोगो वन्दनादौ तथा भक्तितो यत्र भेदप्रवृत्तेरिति प्रथमगुणस्थानकप्रकर्ष एतावानिति समयविदः । स्थिरा तु भिन्नग्रन्थेरेव भवति तद्बोधो रत्नभासमानस्तद्भावो प्रतिपाती प्रवर्धमानो निरपायो नापरपरितापकृत्परितोषहेतुः प्रायेण परिथानादियोनिरिति । कान्तायां तु ताराभासमान एषः । अतः स्थित एव प्रकृत्या निरतिचारमात्रानुष्ठानं शुद्धोपयोगानुसारि विशिष्टाप्रमादसचिवं विनियोगप्रधानगम्भीरोदाराशयमिति । प्रभायां पुनरर्कभाःसमानो बोधः, स ध्यानहेतुरेव सर्वदा, नेह प्रायो विकल्पावसरः, प्रशमसारं सुखमिह । अकिंचित्कराण्यत्रान्यशास्त्राणि, समाधिनिष्ठमनुष्ठानं, तत्संनिधौ वैरादिनाशः परानुग्रहकर्तृता, औचित्ययोगो विनेयेषु, तथावन्ध्या सत्क्रियेति । परायां पुनर्दृष्टिचन्द्रचन्द्रिकाभासमानो बोधः सद्ध्यानरूप एव सर्वदा विकल्परहितो मतः, तदभावेनोत्तमं सुखं, आरूढारोहणवन्नानुष्ठानं प्रतिक्रमणपरोपकारित्वं यथा भव्यत्वं तथा पूर्ववदवन्ध्या क्रियेति । एवं सामान्येन सद्दृष्टेर्योगिनो दृष्टिरष्टधेत्यष्टप्रकारा । अत्राह । ग्रन्थिभेदे सद्दृष्टित्वं स च दीर्घोत्तरकालमिति कथं सद्दृष्टेर्दृष्टिरष्टधेति । उच्यते । अवन्ध्यसद्दृष्टिहेतुत्वेन मित्रादिदृष्टीनामपि सतीत्वादिति वर्षोलकनिष्पत्ताविक्षुरसकक्कबगुडकल्पाः खल्वेताः खण्डसर्करामत्स्याण्डवर्षोलकसमाश्चेतरा इत्याचार्याः । इक्ष्वादीनामेव तथाभवनादिति रुच्यादि-

गोचरा एवैता., एतेषामेव संवेगमाधुर्योपपत्तेः । इक्षुकल्पत्वादिति नलादिकल्पास्तथाभव्या', संवेगमाधुर्यशून्यत्वात् । अनेन सर्वथा परिणामिक्षणिकात्मवादे दृष्टिभेदाभावमाह, तत्तथाभवनानुपपत्तेरिति । इयं च सकलयोगिदर्शनसाधारणेति यथाविधाना यथा भवति तथाविधाना तथाभिधातुमाह—

**यमादियोगयुक्तानां खेदादिपरिहारतः ।**
**अद्वेषादिगुणस्थानं क्रमेणैषा सतां मता ॥ १६ ॥**

यमादियोगयुक्तानामिति । इह यमादयो योगाङ्गत्वाद्योगा उच्यन्ते । यथोक्तं "यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयो ऽष्टावङ्गानि "[१] । तदेव यमादियोगभत्यनीकाशयपरिहारेण । एते ऽपि चाष्टावेव । तथा चोक्तम् ।

खेदोद्वेगक्षेपोत्थानभ्रान्त्यन्यमुद्रुगासङ्गैः ।
युक्तानि हि चित्तानि प्रपञ्चतो वर्जयेन्मतिमान् ॥

तदेव तत्परिहारेणापि क्रमेणैषाष्टधेति । एवमद्वेषादिगुणस्थानमिति यत एतान्यप्यष्टावेव । यथोक्तम् ।

अद्वेषो जिज्ञासा शुश्रूषा श्रवणबोधमीमांसा ।
परिशुद्धा प्रतिपत्तिः प्रवृत्तिरष्टात्मिका तत्त्वे ॥

एवं क्रमेणैषा सद्दृष्टि' सतां मुनीनां भगवत्पतञ्जलिभदन्तभास्करबन्धुभगवद्दत्तवादीनां योगिनामित्यर्थः । मता इष्टा । एतत्साफल्यं च[२] प्रतिदृष्टि दर्शयिष्यामः ॥

---

[१] Patanjali Y S II, 29

[२] A omits

सांप्रतं दृष्टिशब्दार्थाभिधानायाह—

**सच्छ्रद्धासंगतो बोधो दृष्टिरित्यभिधीयते ।**
**असत्प्रवृत्तिव्याघातात्सत्प्रवृत्तिपदावहः ॥ १७ ॥**

"सच्छ्रद्धासंगतो बोधः" इत्यनेनासच्छ्रद्धाव्यवच्छेदमाह । असच्छ्रद्धा चेह शास्त्रबाह्या स्वाभिप्रायतस्तथाविधासदूहात्मिका गृह्यते, तद्वैकल्यात् "सच्छ्रद्धासंगतः" इति । एवंभूतो बोधोऽवगमः । किमित्याह "दृष्टिरित्यभिधीयते[1]" । दर्शनं दृष्टिरिति कृत्वा निष्प्रत्यपायतया । फलत एतामेवाह "असत्प्रवृत्तिव्याघातात्" इति तथा श्राद्धतया शास्त्रविरुद्धप्रवृत्तिव्याघातेन । किमित्याह "सत्प्रवृत्तिपदावहः" इति शास्त्राविरुद्धप्रवृत्तिपदावहोऽवेद्यसंवेद्यपरित्यागेन वेद्यसंवेद्यपदप्रापक इत्यर्थः । वेद्यपदरूपत्वेऽपि स्थिरादिदृष्टीनां सामान्यलक्षणत्वादस्यैवमप्यदोष इति । अथवा सत्प्रवृत्तिपदं परमार्थतः शैलेशीपदमिति तदावहत्वे न कश्चिद्दोष इति ॥

एषा च परिस्थूरभेदादष्टधा, अन्यथा बहुभेदेत्यभिधातुमाह—

**इयं चावरणापायभेदादष्टविधा स्मृता ।**
**सामान्येन विशेषास्तु भूयांसः सूक्ष्मभेदतः ॥१८॥**

इयं चानन्तरोदितलक्षणा दृष्टिः । आवरणापायभेदादावरणापगमभेदेन परिस्थूरनीत्या । अष्टविधा स्मृता पूर्वाचार्यैः सामान्येन सूक्ष्मेक्षिकामनादृत्य । विशेषास्तु भेदाः पुनः सद्दृष्टेर्भूयांसोऽतिबहवः सूक्ष्मभेदतोऽनन्तभेदत्वाद्दर्शनादीनां मिथःषट्स्थानपतितत्वाभिधानादिति ॥

---

[1] MSS. दृष्टिरत्राभिधीयते

इह च दृष्टिसमुच्चये–

प्रतिपातयुताश्चाद्याश्चतस्रो नोत्तरास्तथा ।
सापाया अपि चैतास्तत्प्रतिपातेन नेतरा ॥१९॥

प्रतिपातयुता भ्रंशोपेताः । आद्याश्चतस्रो दृष्टयो मित्रादिरूपाः । एता अपि च प्रतिपातयुता अपि[1] तथा कर्मवैचित्र्यात्, न तु प्रतिपातयुता एव ताभ्यस्तदुत्तरभावादिति नोत्तरास्तथा न स्थिराद्यास्तेन प्रकारेण प्रतिपातयुता इति । यत एव सापाया अपि दुर्गतिहेतुत्वेनैतास्ता एता एव । कथमित्याह " प्रतिपातेन " भ्रंशेन नेतरा न[2] स्थिराद्या सापाया इति । आह । कथं श्रेणिकादीनामेतत्प्रतिपाताद‌पायः । उच्यते । एतदभावोपात्तकर्मसामर्थ्येन । अत एवोक्तं प्रतिपातेन तु सम्भवमात्रमधिकृत्य " सापाया अपि " । तथापि[3] मायोद्भूत्तिविषयत्वात्तन्त्रस्यैवमुपन्यास । अथवा सद्दृष्ट्यपाते सत्यप्यपायोऽप्यनपाय एव वज्रतन्दुलवत्पाकेन तदाशयस्य कायदु खभावेऽपि क्रियानुपपत्तेरित्येवमुपन्यास । योगाचार्या एवात्र प्रमाणमिति । अत प्रतिपातेन नेतरा इति स्थितम् ॥

इहादि–

प्रयाणभङ्गाभावेन निशि स्वापसम पुन ।
विघातो दिव्यभावतश्चरणस्योपजायते ॥ २० ॥

" प्रयाणभङ्गाभावेन " इति कन्यकुब्जादिगमने उनवरतप्रयाणक, अनेनापि । निशि रात्रौ । स्वापसम पुन स्वापतुल्यस्तु । किमित्याह

---

१ A omits

२ A omits

३ B D omit

" विघातः " प्रतिबन्धः " दिव्यभावतः " जन्मनः सकाशात् " चरणस्य " चारित्रस्य " उपजायते " तथाविधौदयिकभावयोगेन तदभावे तु पुनस्तत्रैव प्रवृत्तिः स्वापविगमे ऽनवरतप्रयाणे च[१] कन्यकुब्जगन्तृगमनप्रवृत्तिवत् ॥

इदानीं प्रतिदृष्टिसाकल्येन योगयोजनामुपदर्शयन्नाह—

मित्रायां दर्शनं मन्दं यम इच्छादिकस्तथा ।
अखेदो देवकार्यादावद्वेषश्चापरत्र तु ॥ २१ ॥

मित्रायां दृष्टौ । दर्शनं मन्दं स्वल्पो बोधः, तृणाग्निकणोद्द्योतेन सदृशः । यम अहिंसादिलक्षण इच्छादिकस्तथा यथोक्तं " अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः " । एते चेच्छाप्रवृत्तिस्थैर्यसिद्धिभेदा इति वक्ष्यति । अखेदो देवकार्यादौ, आदिशब्दाद्गुरुकार्यपरिग्रहः । तथा तथोपनत एतस्मिंस्तथापरितोषान्न खेदोऽत्रापि तु प्रवृत्तिरेव शिरोगुरुत्वादिदोषभावेऽपि भवाभिनन्दिनो भोगकार्यवत् । अद्वेषश्चामत्सरश्च । अपरत्र त्वदेवकार्यादौ तथा तत्त्ववेदितया मात्सर्यवीर्यबीजभावे ऽपि तद्भावाङ्कुरानुदयात्तत्त्वानुष्ठानमधिकृत्य कर्मण्यस्याशयः । अतोऽस्यापरत्र न चिन्ता तद्भावेऽपि करुणांशबीजस्यैवेषत्स्फुरणमिति ॥

अस्यां दृष्टौ व्यवस्थितो योगी यत्साधयति तदभिधित्सयाह—

करोति योगबीजानामुपादानमिहस्थितः ।
अवन्ध्यमोक्षहेतूनामिति योगविदो विदुः ॥ २२ ॥

करोति तत्त्वकरणेन । योगबीजानां वक्ष्यमाणलक्षणानाम् । उ-

१ A omits

पादान ग्रहणम् । इहास्थितो मित्राया दृष्टौ मैत्रो योगीत्यर्थः । किंविशिष्टाना योगबीजानामित्याह " अवन्ध्यमोक्षहेतूना " इति । न हि योगबीज न योगफल नाम योगश्च मोक्षफल इति[१] । इति योगविदो विशिष्टा एव योगाचार्या विदुरिति जानते ॥

साम्प्रत योगबीजान्युपन्यस्यन्नाह[२]—

जिनेषु कुशल चित्त तन्नमस्कार एव च ।
प्रणामादि च सशुद्धं योगबीजमनुत्तमम् ॥ २३ ॥

जिनेषु भगवदर्हत्सु । कुशल चित्त द्वेषाद्यभावेन प्रीत्यादिमत् । अनेन मनोयोगवृत्तिमाह । तन्नमस्कार च जिननमस्कार एव च तथा मनोयोगप्रेरित इति । अनेन तु वाग्योगवृत्तिम् । प्रणामादि च पञ्चाङ्गादिलक्षण, आदिशब्दान्मण्डलादिग्रह । " सशुद्ध " इत्यस शुद्धव्यवच्छेदार्थमेतत्, तस्य सामान्येन यथाप्रवृत्तिकरणभेदत्वात्तस्य च योगबीजत्वानुपपत्तेः । एतत्सर्वमेव सामस्त्यप्रत्येकभावाभ्या योगबीज मोक्षयोजकानुष्ठानकारणम् । " अनुत्तम " इति सर्वप्रधान विषयप्राधान्यादिति ॥

यदैतद्भवति तत्समयमभिधातुमाह—

चरमे पुद्गलावर्ते तथाभव्यत्वपाकत ।
सशुद्धमेतन्नियमान्नान्यदापीति तद्विद ॥ २४ ॥

" चरमे पुद्गलावर्ते[३] " इति पुद्गलानामावर्तास्तथा तथा[४] तत्त-

---

१ A C omit

२ A योगबीजमुप०

३ C omits चरमे पुद्गलावर्ते

४ AC omit

द्गृहणसंत्यागाख्यामिति पुद्गलावर्ताः " एते चानादौ[1] संसारे तथा-भव्यत्वाक्षिप्ताः कस्यचित्कियन्तोऽपि " इति वचनप्रामाण्याच्चरमपदे चरमावर्ताभिधानात्। अत्रापि कारणमाह "तथाभव्यत्वपाकतः" इति तथाभव्यत्वपाकेन ततस्तस्मान्मिथ्यात्वकटुकत्वनिवृत्त्या मनाक् माधुर्यसिद्धेः। संशुद्धमेतज्जिनेषु कुशलादि चित्तम्। नियमान्नियमेन तथा-भव्यत्वपाकभावेन दर्मणां तथा, अन्यदा संशुद्धवदसंशुद्धानुपपत्तेः। अत एवाह " नान्यदापि " नान्यस्मिन्नपि काले प्राक् पश्चाच्च क्लिष्टाशयविशुद्धतराशययोगात् । " इति तद्विदः " इत्येवं योगविदोऽभिदधति ॥

एवमस्य समस्तस्य[2] समयमभिधायैतदाभिधित्सया त्वाह-

उपादेयधियात्यन्तं संज्ञाविष्कम्भणान्वितम्।
फलाभिसंधिरहितं संशुद्धं ह्येतदीदृशम्। २५॥

उपादेयधियोपादेयबुद्ध्या, अत्यन्तं सर्वास्यापोहेन तथापरिपाकात्सम्यग्ज्ञानपूर्वरूपत्वेन। संज्ञाविष्कम्भणान्वितं क्षयोपशमवैचित्र्यादाहारादिसंज्ञोदयाभावयुक्तम्। संज्ञा आहारादिभेदेन दश। तथा चार्षम्। "कइविहा णं भन्ते सन्ना पन्नत्ता। गोयमा, दसविहा। आहारसन्ना, भयसन्ना, मेहुणसन्ना, परिग्गहसन्ना, कोहसन्ना, माणसन्ना, मायासन्ना, लोभसन्ना, ओहसन्ना, लोगसन्ना " इति[3]। एतत्संप्रयुक्ताशयानुष्ठानं सुन्दरमप्यभ्युदयाय न निःश्रेयसावाप्तये परिशुद्ध्यभावाद्भवभोगनिःस्पृहाशयप्रभवमेतदिति योगिनः फलाभिसंधिरहितं भवान्तर्गतफला-

---

१ BC ह्यनादौ

२ BC omit

३ Comp. ठाणङ्गसुत्तं ( edited by L. Suali ), X, 60, 1.

भिसन्यभावेन । आह । असम्भव्येव सज्ञाविष्कम्भणे पूर्वोदितफलाभिसन्धि । सत्यमेतत् तद्भवान्तर्गतफलमधिकृत्येह तु तदन्यभवान्तर्गतमपि सामानिकादिलक्षणफलमधिकृत्य गृह्यते तदभिसन्धेरसुन्दरत्वात्तदुपात्तस्यान्य स्वत मतिरन्न्यसारत्वत. । एतद्रहित चेदमपवर्गसाधन, स्वमतिवन्न्यसार तु तत्स्थानस्थितिकार्य एव तथास्वभावत्वात्, गौतमभगवद्धेमानवत्, एवभूतस्येव योगनिष्पादकत्वात । न ह्यशाल्बीजात्कालेनापि शाल्यङ्कुर' । एतत्त्वभिन्नग्रन्थेरपि तदैव भवति चरमयथाप्रवृत्तिकरणसामर्थ्येन तथाविधक्षयोपशममावत्त्वादप्रमत्तयते सरागस्यैव वीतरागभावकल्पम् । यथाहुर्योगाचार्या' । योगबीजचित्त भवसमुद्रनिमग्नस्येपदुन्मज्जनाभोग. तत्सत्तयतिशयशैथिल्यकारी प्रकृते प्रथमविपियेक्षातत्माकृतकारिणी समुज्जासनागमोपायन च इतस्तदुचितचिन्तासमावेगकृद्धर्थिपर्वतपरमवज्र नियमात्तद्भेदकारि भावचारिकपलायनकाल्घण्टातत्पसारकारिणी समासेनत्याणि । अत सशुद्ध ह्येतदीदृगमेतदिति जिनकुशलचिन्तादि । एतच्च तथाविधकालादिभावेन तत्तत्स्वभावतया फल्पाकारम्भसदृशमिति ॥

न चेदमेव केवल योगबीजमिति तन्न्तराभिधित्सयाह—

आचार्यादिष्वपि ह्येतद्विशुद्ध भावयोगिषु ।
वैयावृत्त्य च विधिवच्छुद्धाशयविशेपत ॥ २६ ॥

आचार्यादिष्वप्याचार्योपाध्यायतपस्व्यादिष्वप्येतदेव कुशलचित्तादि विशुद्ध सशुद्धमेवेत्यर्थ १ । किविशिष्टेषु । आह "भावयोगिषु" न द्रव्याचार्यादिष्वधर्मजलक्षणेषु कूटरूपे खल्वकटबुद्धेरप्यसुन्दरत्वात् । नैतदेव केवल योगबीजम् । कि तर्हि । "वैयावृत्त्य च" व्यावृत्त-

---

१ A omits सशुद्धम्

भावलक्षणमाहारादिना विधिश्चत्सूत्रोक्तविधियुक्तं पुरुषाद्यपेक्षयेत्यर्थः ।
यदाह ।

पुरिसन्तस्सुवयारं उवयारं च-ऽप्पणो य णाऊणं ।
कुज्जा वेयावडियं आणं काऊं निरासेसो ॥ इत्यादि ॥

अत एवाह "शुद्धाशयविशेषतः" शुद्धचित्तप्रबन्धविशेषेण ॥

अयं च तथाविधकालभावेनेत्युक्तप्रायं बीजान्तरमाह ।

**भवोद्वेगश्च सहजो द्रव्याभिग्रहपालनम् ।**
**तथा सिद्धान्तमाश्रित्य विधिना लेखनादि च ॥२७॥**

भवोद्वेगश्च संसारोद्वेगश्च जन्मादिरूपतया भवत्यस्य सहजो नेष्ट-योगादिनिमित्तः, तस्यार्तध्यानरूपत्वात् । उक्तं च ।

प्रत्युत्पन्नात्तु दुःखान्निर्वेदो द्वेष ईदृशः
न वैराग्यमित्यादि योगबीजमिति वर्तते ॥

तथा द्रव्याभिग्रहणपालनमोषधादिसमादानमधिकृत्य[1] भवाभि-ग्रहस्य विशिष्टक्षयोपशमभावरूपस्याभिग्रन्थेरसंभवाद्द्रव्याभिग्रहणम् ।
तथा सिद्धान्तमाश्रित्यार्थं न तु कामादिशास्त्राणि । किमित्याह "वि-धिना" न्यायात्तधनसत्प्रयोगादिलक्षणेन । किमित्याह "लेखनादि च" योगबीजमनुत्तममिति ॥

आदिशब्दार्थमाह ।

**लेखना पूजना दानं श्रवणं वाचनोद्ग्रहः ।**
**प्रकाशनाथ स्वाध्यायश्चिन्तना भावनेति च ॥२८॥**

---

१ A ०संप्रदानमधि०

लेखना सत्पुस्तकेषु, पूजना पुष्पवस्त्रादिभि, दानं पुस्तकादेः, श्रवणं व्याख्यानस्य, वाचना स्वयमेव, अस्योद्ग्रहो विधिग्रहणं, अस्यैव प्रकाशना गृहीतस्य भव्येषु, अथ स्वाध्यायो वाचनादिः, अस्यैव चिन्तना ग्रन्थार्थतः, अस्यैव भावनेति चैतद्गोचरैव योगबीजमिति योगः ॥

तथा ।

बीजश्रुतौ च संवेगात्प्रतिपत्तिः स्थिराशया ।
तदुपादेयभावश्च परिशुद्धो महोदयः ॥ २९ ॥

बीजश्रुतौ च यथोक्तगोचरायां संवेगाच्छ्रद्धाविशेषात्प्रतिपत्तिः "एवमेतत्" इत्येवंरूपा स्थिराशया तथाविधचित्तसन्तानविस्रोतसिकाभावेन । तदुपादेयभावश्च बीजश्रुत्युपादेयभावश्च परिशुद्धः फलौत्सुक्याभावेन महोदयः । स एवानुषङ्गिकाभ्युदयतो निःश्रेयससाधनादिति ॥

एवमेतद्योगबीजोपादानं यथा जायते तथाभिधातुमाह—

एतद्भावमले क्षीणे प्रभूते जायते नृणाम् ।
करोत्यव्यक्तचैतन्यो महत्कार्यं न यत्क्वचित् ॥३०॥

एतदनन्तरोदितं योगबीजोपादानं भावमले तत्तत्पुद्गलादिसंबन्धयोग्यतालक्षणे क्षीणे सति न स्तोके किं तु प्रभूतपुद्गलपरावर्तक्षेपके जायते हि प्रादुर्भवति नृणां पुंसाम् । प्रायः एतेऽधिकारिण इति नृग्रहणं, अन्यथा चातुर्गतिकमेतत्प्रभूत एव क्षीणे नाल्पे इत्याह "करोत्यव्यक्तचैतन्यः" हिताहितविवेकशून्यो नाऽऽ "न महत्कार्यं" अर्थानुष्ठानादि "यत्क्वचित्" किं तु व्यक्तचैतन्य एव करोति यस्मादस्य क्षयोऽभिमतः ॥

तदुपदर्शयन्नाह[1]—

**चरमे पुद्गलावर्ते क्षयश्चास्योपपद्यते ।**
**जीवानां लक्षणं तत्र यत एतदुदाहृतम् ॥ २१ ॥**

चरमे पुद्गलावर्ते यथोदितलक्षणे क्षयश्चास्योपपद्यते भावमलस्य जीवानां लक्षणं तत्र चरमे पुद्गलावर्ते यत एतदुदाहृतं वक्ष्यमाणमिति ॥

यदुदाहृतं तदभिधातुमाह—

**दुःखितेषु दयात्यन्तमद्वेषो गुणवत्सु च ।**
**औचित्यात्सेवनं चैव सर्वत्रैवाविशेषतः ॥ २२ ॥**

दुःखितेषु शरीरादिना दुःखेन दयात्यन्तं सानुशयत्वमित्यर्थः । अद्वेषोऽमत्सरः । केष्वित्याह " गुणवत्सु च " विद्यादिगुणयुक्तेषु । औचित्यात्सेवनं चैव शास्त्रानुसारेण सर्वत्रैव दीनादावविशेषतः सामान्येन ॥

यतश्चैवमतः—

**एवंविधस्य जीवस्य भद्रमूर्तेर्महात्मनः ।**
**शुभो निमित्तसंयोगो जायतेऽवञ्चकोदयात् ॥२३॥**

एवंविधस्यानन्तरोदितलक्षणयोगिनो भद्रमूर्तेः प्रियदर्शनस्य महात्मनः सद्वीर्ययोगेन । किमित्याह "शुभः" प्रशस्तः । क इत्याह " निमित्तसंयोगः " सद्योगादिसंयोगः सद्योगादीनामेव निःश्रेयससाधननिमित्तत्वात् । जायते । कुत इत्याह " अवञ्चकोदयात् " वक्ष्यमाणसमाधिविशेषोदयादित्यर्थः ॥

---

१ A तदादर्शयन्नाह

"अवञ्चकोदयात्" इत्युक्त, अत एतत्स्वरूपप्रतिपिपादयिषयाह–

**योगक्रियाफलाख्यं यच्छ्रूयते ऽवञ्चकत्रयम् ।**
**साधूनाश्रित्य परममिषुलक्ष्यक्रियोपमम् ॥ ३४ ॥**

योगक्रियाफलाख्य यस्माच्छ्रूयते ऽवञ्चकत्रयमागमे "योगावञ्चक' क्रियावञ्चकः फलावञ्चक' " इति वचनात् । अव्यक्तसमाधिरेषैष तन्निकारे पाठात्, चित्रक्षयोपशमतस्तथाविध आशयविशेष इति । एतच्च साधूनाश्रित्य साधवो मुनय. परममवञ्चकत्रय स्वरूपतस्त्वेतदिषुलक्ष्यक्रियोपम शरस्य लक्ष्यक्रिया तत्प्रधानतया तदविसवादिन्येव, अन्यथा लक्ष्यक्रियात्वायोगात् । एव साधूनाश्रित्य योगावञ्चकस्तद्योगाविसवादी । एव तद्वन्दनादिक्रिया तत्फल चाश्रित्यैव एवमेव द्रष्टव्यत इति ॥

एतदपि यन्निमित्त तदभिधातुमाह–

**एतच्च सत्प्रणामादिनिमित्त समये स्थितम् ।**
**अस्य हेतुश्च परमस्तथाभावमलाल्पता ॥ ३५ ॥**

एतच्चावञ्चकत्रय सत्प्रणामादिनिमित्त साधुवन्दनादिनिमित्तमित्यर्थ । समये स्थित सिद्धान्ते प्रतिष्ठितम् । अस्य सत्प्रणामादेर्हेतुश्च परम' । क इत्याह "तथाभावमलाल्पता" कर्मसम्बन्धयोग्यताल्पता रत्नादिमलापगमे ज्योत्स्नादिप्रवृत्तिवदिति योगाचार्या ॥

प्रकृतवस्तपोद्बलनाय व्यतिरेकसारमाह–

**नास्मिन् घने यत सत्सु तत्प्रतीतिर्महोदया ।**
**किं सम्यग् रूपमादत्ते कदाचिन्मन्दलोचन ॥३६॥**

नास्मिन् भावमले घने प्रबले यतः सत्सु साधुषु तत्प्रनीतिः । किंविशिष्टेत्याह " महोदया " अभ्युदयादिसाधकत्वेन । प्रतिवस्तूपमयाऽमुमेवार्थमाह " किं सम्यग् रूपमादत्ते " लक्षणव्यञ्जनादिकात्स्न्येंन " कदाचिन्मन्दलोचनः " इन्द्रियदोषान्नादत्त एवेत्यर्थः ॥

अधुनान्वयसारमधिकृतवस्तुसमर्थनायैवाह—

अल्पव्याधिर्यथा लोके तद्विकारैर्न बाध्यते ।
चेष्टते चेष्टसिद्ध्यर्थं वृत्त्यैवायं तथा हिते ॥ ३७ ॥

अल्पव्याधिः क्षीणप्रायरोगः । यथा लोके कश्चित्तद्विकारैः कण्ड्वादिभिर्न वा यते व्याधेरल्पत्वेन न बाध्यते । किं चेत्याह " चेष्टते च" राजसेवादौ " इष्टसिद्ध्यर्थं " कुटुम्बादिपालनाय । एष दृष्टान्तोऽयमर्थोपनय इत्याह " वृत्त्यैव " धर्मयोनिरूपया । एतच्च "धृतिः श्रद्धा सुखविविदिषा विज्ञप्तिरिति धर्मयोनयः " इति वचनात् । तदनया हेतुभूतयायं योगी तथाल्पव्याधिपुरुषवत्स्थिराकार्यप्रवृत्तिनिरोधेन हिते हितविषये दानादौ चेष्टत इति ॥

एतदनन्तरोदितमखिलमत्र यदोपजायते तदभिधातुमाह—

यथाप्रवृत्तिकरणे चरमेऽल्पमलत्वतः ।
आसन्नग्रन्थिभेदस्य समस्तं जायते ह्यदः ॥३८॥

यथाप्रवृत्तिकरणे प्राग्व्यावर्णितस्वरूपे । चरमे पर्यन्तवर्तिनि । अल्पमलत्वतः कारणात् । आसन्नग्रन्थिभेदस्य सतः समस्तमनन्तरोदितं जायते ह्यद एतादिति ॥

अथवा चरमं यथाप्रवृत्तमिदमपूर्वमेवेत्याह—

अपूर्वासन्नभावेन व्यभिचारवियोगतः ।
तत्त्वतोऽपूर्वमेवेदमिति योगविदो विदुः ॥ ३९ ॥

अपूर्वासन्नभावेन हेतुना । तथा व्यभिचारवियोगतः कारणात् । तत्त्वत. परमार्थेनापूर्वमेवेद चरम यथाप्रवृत्तमिति योगविदो विदुरेव योगविदो जानत इति भावः ॥

इहैव गुणस्थानयोजनमाह–

**प्रथमं यद्गुणस्थान सामान्येनोपवर्णितम् ।**
**अस्यां तु तदवस्थाया मुख्यमन्वर्थयोगत ॥४०॥**

प्रथममाद्य यद्गुणस्थान मिथ्यादृष्ट्याख्य सामान्येनोपवर्णित-मागमे "मिच्छदिट्ठी सा सायणाइ" इति वचनात् । अस्या तु तद-वस्थायामित्यस्यामेव मुख्य निरुपचरितम् । कुत इत्याह "अन्वर्थयो-गत." एवगुणभावेन गुणस्थानोपपत्तेरित्युक्ता मित्रा ॥

अधुना तारोच्यते । तत्राह–

**ताराया तु मनाक्स्पष्ट नियमश्च तथाविध ।**
**अनुद्वेगो हितारम्भे जिज्ञासा तत्त्वगोचरा ॥४१॥**

ताराया पुनर्दृष्टौ । किमित्याह "मनाक्स्पष्ट" दर्शनमिति, अत' "नियमश्च तथाविधः" शौचादिरिच्छादिरूप एव "शौचसंतो-पतपःस्वाध्यायेश्वरप्रणिधानानि नियमा'" इति वचनात्[१] । तदत्र द्वितीययोगाङ्गप्रतिपत्तिरपि मित्राया स्वेतदभाव एव तथाविधक्षयो-पशमाभावात् । तथानुद्वेगो हितारम्भे पारलौकिके ऽखेदसहित, अत एव तत्सिद्धिः[२] । तथा जिज्ञासा तत्त्वगोचरा द्वेषत एव तत्प्रतिपत्त्या-नुगुण्यमिति ॥

अस्या दृष्टौ[२] यदन्यद्गुणजात भवति तदाह–

---

[१] Patanjali Y S II, 32

[२] A omits

भवत्यस्यां तथाच्छिन्ना प्रीतिर्योगकथास्वलम् ।
शुद्धयोगेषु नियमाद्बहुमानश्च योगिषु ॥ ४२ ॥

भवत्यस्यां दृष्टौ । तथा तेन प्रकारेण । अच्छिन्ना भावप्रतिबन्धसारतया । प्रीतिर्योगकथास्वलमत्यर्थं तथा शुद्धयोगेष्वकल्कप्रधानेषु नियमेन बहुमानश्च योगिषु भवति ॥

न केवलमयम् । किं च–

यथाशक्त्युपचारश्च योगवृद्धिफलप्रदः ।
योगिनां नियमादेव तदनुग्रहधीयुतः ॥ ४३ ॥

यथाशक्त्युक्ते शक्त्यौचित्येनेत्यर्थः[1] । किमित्याह " उपचारश्च" ग्रासादिसंपादनेन यथोक्तयोगिष्विति प्रक्रमः । स एव विशिष्यते । "योगवृद्धिफलप्रदः" तत्सम्यक्परिणामेन "योगिनां नियमादेव" नान्यथा तद्विघातहेतुरिति "तदनुग्रहधीयुतः" उपचारसंपादकानुग्रहबुद्धियुक्त इत्यर्थः ॥

अयमेव विशिष्यते–

लाभान्तरफलश्चास्य श्रद्धायुक्तो हितोदयः ।
क्षुद्रोपद्रवहानिश्च शिष्टसम्मतता तथा ॥ ४४ ॥

लाभान्तरफलश्चास्योपचारकर्तुः, शुद्धोपचारपुण्यात्तथाविपाकभावात् । अत एव श्रद्धायुक्त उपचार इति प्रक्रमः । हितोदयः पूर्ववत् । क्षुद्रोपद्रवहानिश्च भवति । अत एव व्याध्यादिनाशः । शिष्टसम्मतता तथा । अत एवास्यातिसुन्दरो बहुमानः ॥

तथा ।

---

१ B omits

भय नातीव भवज कृत्यहानिर्न चोचिते ।
तथानाभोगतो ऽप्युच्चैर्न चाप्यनुचितक्रिया ॥ ४५ ॥

भय नातीव भवज तथाशुभाप्रवृत्तेः । कृत्यहानिर्न चोचिते सर्वस्मिन्नेव धर्मादरात् । तथानाभोगतो ऽप्युच्चैरत्यर्थं न चाप्यनुचितक्रिया सर्वत्रैव ॥

एवं-

कृत्ये ऽधिकेऽधिकगते जिज्ञासा लालसान्विता ।
तुल्ये निजे तु विकले संत्रासो द्वेषवर्जित ॥ ४६ ॥

कृत्ये पानादौ । अधिके स्वभूमिकापेक्षया । अधिकगत आचार्यादिवर्तिनि । जिज्ञासास्य । कथमेतन्मेमिति "लालसान्विता" अभिलाषातिरेकयुक्ता । तुल्ये कृत्ये वन्दनादौ निजे स्वात्मीय एव विकले कायोत्सर्गकरणादिना सत्रासो भवत्यात्मनि हानिविशेषको ऽहमिति द्वेषवर्जितो ऽधिके ऽधिकृतदृष्टिसामर्थ्यादिति ॥

दु खरूपो भव सर्व उच्छेदो ऽस्य कुत कथम् ।
चित्रा सता प्रवृत्तिश्च साशेषा ज्ञायते कथम् ॥४७॥

दु खरूपो भव सर्वो जन्मजरादिरूपत्वात्। उच्छेदोऽस्य भवस्य कुतो हेतो । क्षान्त्यादे । कथ केन प्रकारेण । चित्रा सतां मुनीनां प्रवृत्तिश्चैत्यकर्मादिना प्रकारेण साशेषा ज्ञायते कथ, तन्न्यायोहन ॥

यत -

नास्माकं महती प्रज्ञा सुमहान् शास्त्रविस्तर ।
शिष्टा प्रमाणमिह तदित्यस्यां मन्यते सदा ॥४८॥

---

१ A omits

नास्माकं महती प्रज्ञा संवादिनी स्वप्रज्ञाविकल्पिते विसंवाददर्शनात् । तथा सुमहान् शास्त्रविस्तरः, तत्तत्प्रवृत्तिहेतुत्वात्[१] । एवं शिष्टाः साधुजनसम्मताः प्रमाणमिह व्यतिकरे तस्मादित्येतत्मस्यां दृष्टौ मन्यते सदा यत्तैराचरितं तदेव[२] यथाशक्ति सामान्येन कर्तुं युज्यत इत्यर्थः ॥

उक्ता तारा । अधुना बलोच्यते । तत्राह–

सुखासनसमायुक्तं बलायां दर्शनं दृढम् ।
परा च तत्त्वशुश्रूषा न क्षेपो योगगोचरः ॥ ४९ ॥

सुखासनसमायुक्तमिति स्थिरसुखासनवत । बलायां दृष्टौ दर्शनं प्रागुक्तं दृढं काष्ठादिकणोपममिति कृत्वा । परा च तत्त्वशुश्रूषा जिज्ञासा संभवति । न क्षेपो योगगोचरः, तदनुद्वेगज इति कृत्वा ॥

असुमेवार्थमाह ।

तस्यां सत्यामसत्तृष्णा प्रकृत्यैव प्रवर्तते ।
तदभावाच्च सर्वत्र स्थितमेव सुखासनम् ॥ ५० ॥

तस्यामधिकृतदृष्टौ सत्यामसत्तृष्णा स्थितिनिबन्धनातिरिक्तगोचरा प्रकृत्यैव स्वभावेनैव प्रवर्तते, विशिष्टशुद्धियोगात् । तदभावाच्चासत्तृष्णाभावाच्च[३] सर्वत्र व्याप्त्या स्थितमेव सुखासनं तथापरिभ्रमणाभावेन ॥

एतदेवाह–

---

१ A तत्तत्प्रवृत्तिहेतुभूतः ।

२ B omits

३ C omits असत्तृष्णाभावाच्च

अत्वरापूर्वकं सर्वं गमनं कृत्यमेव वा ।
प्रणिधानसमायुक्तमपायपरिहारतः ॥ ५१ ॥

अत्वरापूर्वकमनाकुलमित्यर्थः । सर्वं सामान्येन । किं तदित्याह "गमनं" देवकुलादौ "कृत्यमेव वा[१]" वन्दनादि "प्रणिधानसमायुक्तं" मनःप्रणिधानपुरःसरं "अपायपरिहारतः" दृष्टाद्यपायपरिहारेण ॥

उक्तं दर्शनम् । अस्यैव शुश्रूषामाह ।

कान्तकान्तासमेतस्य दिव्यगेयश्रुतौ यथा ।
यूनो भवति शुश्रूषा तथास्यां तत्त्वगोचरा ॥५२॥

कान्तकान्तासमेतस्य कमनीयप्रियतमायुक्तस्य दिव्यगेयश्रुतौ यथा किन्नरादिगेयश्रुतावित्यर्थः । यूनो वयःस्थस्य भवति शुश्रूषा श्रोतुमिच्छा तद्विचारेऽ तथास्यां दृष्टौ व्यवस्थितस्य सतस्तत्त्वगोचरा तत्त्वविषयेऽ शुश्रूषा भवति ॥

इयं चैवंभूतेत्याह—

बोधाम्भःस्रोतसश्चैषा सिरातुल्या सतां मता ।
अभावेऽस्याः श्रुतं व्यर्थमसिरावनिकूपवत् ॥ ५३ ॥

बोधाम्भःस्रोतसो बोधोदकप्रवाहस्य चैषा शुश्रूषा सिरातुल्या-वन्ध्याश्रयतद्बीजकल्पतया सतां मता मुनीनामिष्टा । अभावेऽस्याः शुश्रूषायाः । किमित्याह "श्रुतं व्यर्थं" श्रमफलम् । किंवदित्याह "असिरावनिकूपवत्"[२] असिरावनौ पृथिव्यां कूपखननं, अतत्खननमेवातत्फलत्वादिति ॥

---

१ B omits

२ L omits

इहैव व्यतिरेकमाह ।

**श्रुताभावे ऽपि भावेऽस्याः शुभभावप्रवृत्तितः ।**
**फलं कर्मक्षयाख्यं स्यात्परबोधनिबन्धनम् ॥ ५४ ॥**

श्रुताभावेऽपि श्रवणाभावेऽपि भावे ऽस्याः शुश्रूषायाः किमित्याह "शुभभावप्रवृत्तितः" तद्भावस्यैव शुभत्वात्[१] "फलं कर्मक्षयाख्यं स्यात्" वचनप्रामाण्येन । एतच्च परबोधनिबन्धनं प्रधानबोधकारणं, वचनप्रामाण्यादेव ॥

योगे ऽक्षेपगुणमाह ।

**शुभयोगसमारम्भे न क्षेपोऽस्यां कदाचन[२] ।**
**उपायकौशलं चापि चारु तद्विषयं भवेत् ॥ ५५ ॥**

शुभयोगसमारम्भे तथाविधध्यानादौ न क्षेपो ऽस्यामधिकृतदृष्टौ सत्यां कदाचन भवति । उपायकौशलं चापि तथाविधदेशाभ्यासनादि चारु शोभनं तद्विषयं शुभयोगसमारम्भविषयं भवेदिति ॥

तथास्यामेव दृष्टावभ्युच्चयमाह ।

**परिष्कारगतः प्रायो विघातोऽपि न विद्यते ।**
**अविघातश्च सावद्यपरिहारान्महोदयः ॥ ५६ ॥**

परिष्कारगत उपकरणगत इत्यर्थः । प्रायो बाहुल्येन । विघातो ऽपीच्छाप्रतिबन्धो न विद्यते अस्यां सत्यामिति । अविघातश्च किंभूतो भवतीत्याह "सावद्यपरिहारात्" प्रतिषिद्धपरिहारेण "महोदयः" अभ्युदयनिःश्रेयसहेतुरित्यर्थः ॥

उक्ता बला । सांप्रतं दीप्रामाह ।

---

१ B शुभभावत्वात्

२ C स्यात्कदाचन

प्राणायामवती दीप्रा न योगोत्थानवत्यलम् ।
तत्त्वश्रवणसंयुक्ता सूक्ष्मबोधविवर्जिता ॥ ५७ ॥

प्राणायामवती चतुर्थाङ्गभावतः, भावरेचकादिभावात् । दीप्रा चतुर्थी दृष्टिः । न योगोत्थानवती, तथाविधप्रशान्तवाहितालाभेन । अलमत्यर्थम् । तत्त्वश्रवणसंयुक्ता शुश्रूषाफलभावेन । सूक्ष्मबोधविवर्जिता निपुणबोधरहितेत्यर्थः ॥

भावरेचकादिगुणमाह ।

प्राणेभ्योऽपि गुरुर्धर्मः सत्यामस्यामसंशयम् ।
प्राणांस्त्यजति धर्मार्थं न धर्मं प्राणसंकटे ॥५८॥

प्राणेभ्योऽपीन्द्रियादिभ्यो गुरुर्धर्मो महत्तर इत्यर्थः । सत्यामस्यामधिकृतदृष्टौ दीप्रायामसंशयम् । एतदेव दर्शयन्नाह "प्राणांस्त्यजति धर्मार्थं" तत्त्वोत्सर्गप्रवृत्त्या "न धर्मं प्राणसंकटे" त्यजति तत्त्वोत्सर्गप्रवृत्त्यैव ॥

अत्र प्रतिबन्धनमाह ।

एक एव सुहृद्धर्मो मृतमप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥ ५९ ॥

एक एव सुहृद्धर्मः नान्यः, तल्लक्षणयोगात् । तथाह "मृतमप्यनुयाति यः" इति "शरीरेण समं नाशं" यतः "सर्वमन्यत्तु गच्छति" त्यजनात् ॥

इत्थं सदाशयोपेतस्तत्त्वश्रवणतत्परः ।
प्राणेभ्यः परमं धर्मं बलादेव प्रपद्यते ॥ ६० ॥

इत्थमेवं सदाशयोपेत उक्तन्यायेन तत्त्वश्रवणतत्परः सन् प्रधानं प्राणेभ्यः

परमं धर्मं बलादेव प्रपद्यते, तत्स्वभावत्वात् । स्वत एव न योगोत्थानमस्य ॥

तच्छ्रवणगुणमाह ।

क्षाराम्भस्त्यागतो यद्वन्मधुरोदकयोगतः ।
बीजं प्ररोहमाधत्ते तद्वत्तत्त्वश्रुतेर्नरः ॥ ६१ ॥

क्षाराम्भस्त्यागतो यद्वन्मधुरोदकयोगतः, तन्माधुर्यानवगमेऽपि स्पष्टसंचित्या बीजं प्ररोहमादत्ते तद्वत्तत्त्वश्रुतेर्नरः, तत्त्वश्रुतेरचिन्त्यसामर्थ्यान्महाप्रभावत्वादिति ॥

अस्यैव भावार्थमाह ।

क्षाराम्भस्तुल्य इह च भवयोगोऽखिलो मतः ।
मधुरोदकयोगेन समा तत्त्वश्रुतिस्तथा ॥ ६२ ॥

क्षाराम्भस्तुल्य इह च भवयोगोऽखिलो मतोऽतत्त्वश्रवणरूपोऽपि मधुरोदकयोगेन समा तत्त्वश्रुतिस्तथा तदङ्गतया तत्त्वश्रुतिरपीति ॥

अस्या एव गुणमाह ।

अतस्तु नियमादेव कल्याणमखिलं नृणाम् ।
गुरुभक्तिसुखोपेतं लोकद्वयहितावहम् ॥ ६३ ॥

अतस्त्वित्यत एव तच्छ्रुतेः[1] । किमित्याह "नियमादेव कल्याणं" परोपकारादि "अखिलं नृणां" तत्त्वश्रुतेस्तथाविधाशयभावात् । तदेव विशिष्यते । गुरुभक्तिसुखोपेतं कल्याणं तदाज्ञया तत्करणस्य तत्त्वतः कल्याणत्वात् । अत एवाह "लोकद्वयहितावहं" अनुबन्धस्य गुरुभक्तिसाध्यत्वादिति ॥

---

१ B तत्त्वश्रुतेः

अस्या एव विशेषतः परं फलमाह ।

गुरुभक्तिप्रभावेन तीर्थकृद्दर्शनं मतम् ।
समापत्त्यादिभेदेन निर्वाणैकनिबन्धनम् ॥ ६४ ॥

गुरुभक्तिप्रभावेन गुरुभक्तिसामर्थ्येन तदुपात्तकर्मविपाकत इत्यर्थः । किमित्याह "तीर्थकृद्दर्शनं मतं" भगवद्दर्शनमिष्टम् । कथमित्याह "समापत्त्यादिभेदेन" समापत्तिर्ध्यानतः स्पर्शना तया, आदिशब्दात्तन्नामकर्मबन्धविपाकतस्तद्भावापत्त्युपपत्तिपरिग्रहः । तदेव विशिष्यते "निर्वाणैकनिबन्धनं" असाधारणमोक्षकारणमसाधारणमित्यर्थः ॥

इह प्रतिषिद्धसूक्ष्मबोधलक्षणाभिधित्सयाह—

सम्यग्घेत्वादिभेदेन लोके यस्तत्त्वनिर्णयः ।
वेद्यसंवेद्यपदतः सूक्ष्मबोधः स उच्यते ॥ ६५ ॥

सम्यगविपरीतेन विधिना हेत्वादिभेदेनेति हेतुस्वरूपफलभेदेन लोके विद्वत्समवाये यस्तत्त्वनिर्णयः परमार्थपरिच्छेदः । कुत इत्याह "वेद्यसंवेद्यपदतः" वक्ष्यमाणलक्षणाद्वेद्यसंवेद्यपदात्[1] । सूक्ष्मबोधः स उच्यते निपुण इत्यर्थः ॥

इहैव विशेषतः प्रवृत्तिनिमित्तमाह ।

भवाम्भोधिसमुत्तारात्कर्मवज्रविभेदतः ।
ज्ञेयव्याप्तेश्च कार्त्स्न्येन सूक्ष्मत्वं नायमत्र तु ॥६६॥

भवाम्भोधिसमुत्तारात्संसारसमुद्रसमुत्तारणाद्बोधोत्तरकालभाविनो हेतुतया । तथा कर्मवज्रविभेदतः कर्मवज्रविभेदेन विभेदतश्च पुनर्ग्रहणतः । ज्ञेयव्याप्तेश्च कार्त्स्न्येनानन्तधर्मात्मकवस्तुत्वप्रतिपत्त्या सूक्ष्मत्वं निपुणत्वं

---

[1] ( ७०।।० गोम

बोधस्य नायमत्र तु नायं सूक्ष्मो बोधः । अत्र दीप्रायां दृष्टावयस्त्वासु च तत्त्वतो ग्रन्थिभेदासिद्धेरिति ॥

अवेद्यसंवेद्यपदं यस्मादासु तथोल्वणम् ।
पक्षिच्छायाजलचरप्रवृत्त्याभमतःपरम् ॥ ६७ ॥

अवेद्यसंवेद्यपदं वक्ष्यमाणलक्षणं यस्मादासु मित्राद्यासु चतसृषु दृष्टिषु तथोल्वणं तेन निवृत्त्यादिपदप्रकारेण प्रबलमुद्धतमित्यर्थः । पक्षिच्छायाजलचरप्रवृत्त्याभं पक्षिच्छायायां तद्धिया जलचरप्रवृत्त्याकारम् । अतःपरं वेद्यसंवेद्यपदमासु न तात्त्विकमित्यर्थः, ग्रन्थिभेदासिद्धेरित्येतदपि चरमासु चरमयथाप्रवृत्तकरणेनैवेत्याचार्याः ॥

किमेतदेवमित्याह–

अपायशक्तिमालिन्यं सूक्ष्मबोधविबन्धकृत् ।
नैतद्वतो ऽयं तत्तत्त्वे कदाचिदुपजायते ॥६८॥

अपायशक्तिमालिन्यं[1] नरकाद्यपायशक्तिमालिनत्वम् । किमित्याह "सूक्ष्मबोधविबन्धकृत्" अपायहेत्वासेवनक्लिष्टबीजभावेन । नैतद्वतो ऽपायशक्तिमालिन्यवतो ऽयं बोधः । तत्तस्मात् । "तत्त्वे" इति तत्त्वविषये । कदाचिदुपजायते, अवन्ध्यस्थूरबोधबीजभावादित्यर्थः ॥

यस्मादेवम्–

अपायदर्शनं तस्माच्छ्रुतदीपान्न तात्त्विकम् ।
तदाभालम्बनं त्वस्य तथा पापे प्रवृत्तितः ॥ ६९ ॥

अपायदर्शनं दोषदर्शनं तस्माच्छ्रुतदीपादागमान्न तात्त्विकं न पारमार्थिकमस्येति योगः । तदाभालम्बनं तु परमार्थाभाविषयं पुनर्भ-

1 B adds नरकाद्यपायशक्तिमालिन्यं

वति भ्रान्त्या। कुत इत्याह “तथापाये मप्रवृत्तितः” तथा चित्रानाभोगप्रकारेण पापे प्रवृत्तेरिति ॥

अतोऽन्यदुत्तरास्वस्मात्पापे कर्मागसो ऽपि हि।
तप्तलोहपदन्यासतुल्या वृत्ति क्वचिद्यदि ॥ ७० ॥

अतोऽन्यदुत्तरास्विति प्रक्रमाद्वेद्यसंवेद्यपदम् । उत्तरास्विति स्थिरादासु चतसृषु दृष्टिषु। अस्माद्वेद्यसंवेद्यपदात्पापकर्मणि हिंसादौ कर्मागसो ऽपि हि कर्मापराधादपि । किमित्याह “तप्तलोहपदन्यासतुल्या वृत्तिः” संवेगसारापाये क्वचिद्यदि भवति, प्रायस्तु न भवत्येवेति।

किमित्येवंभूतेत्याह–

वेद्यसंवेद्यपदत संवेगातिशयादिति।
चरमैव भवत्येषा पुनर्दुर्गत्ययोगत ॥ ७१ ॥

वेद्यसंवेद्यपदतो वक्ष्यमाणलक्षणात्संवेगातिशयादित्यतिशयसंवेगेन चरमैव भवत्येषा पापप्रवृत्तिः। कुत इत्याह[१] “पुनर्दुर्गत्ययोगत” श्रेणिकाद्युदाहरणात्प्रतिपतितसद्दर्शनानामनन्तसंसारिणामनेकधादुर्गतियोग इति यत्किंचिदेतत्, नाभिप्रायापरिज्ञानात् क्षायिकसम्यग्दृष्टेरेव नैश्चयिकवेद्यसंवेद्यपदभाव इत्यभिप्रायाद्व्यावहारिकम्। अपि तु। एतदेव चारु सत्येतस्मिन् प्रायो दुर्गतावपि मानसदुःखाभावात्, वज्रतन्दुलवदस्य भावपाकायोगात्। अचारु पुनरेकान्तत एव। अतोऽन्यदिति॥

यदाह–

अवेद्यसंवेद्यपदमपद परमार्थत ।
पद तु वेद्यसंवेद्यपदमेव हि योगिनाम् ॥७२॥

---

१ A omits पाप० इत्याह

अवेद्यसंवेद्यपदमिति मिथ्यादृष्ट्याशयस्थानम् । अत एवाह "अपदं परमार्थतः" यथावस्थितवस्तुतत्त्वतापादनात् । पदं तु पदं पुनर्वेद्यसंवेद्यपदमेव वक्ष्यमाणलक्षणमन्वर्थयोगादिति ।

तथा चाह–

वेद्यं संवेद्यते यस्मिन्नपायादिनिबन्धनम् ।
तथाप्रवृत्तिबुद्ध्यापि स्त्र्याद्यागमविशुद्धया ॥७३॥

वेद्यं वेदनीयं वस्तु स्थितया तथाभावयोगिसामान्येनाविकल्पक-ज्ञानग्राह्यमिति योऽर्थः संवेद्यते क्षयोपशमानुरूपं निश्चयबुद्ध्यापि ज्ञायते यस्मिन्पद आशयस्थाने । किंविशिष्टमित्याह "अपायादिनिबन्धनं" नरकस्वर्गादिकारणम् । स्त्र्यादि । तथा तेन प्रकारेण येन सामान्या-नुविद्धमप्रवृत्तिबुद्ध्यापि तदुपादानत्यागाशयात्मिकया संवेद्यते स्त्र्यादि-वेद्यमागमविशुद्धया श्रुतापनीतविपर्ययमलया प्रधानमिदमेव बन्धकारणं प्रेक्षावतामपीति स्त्र्यादिग्रहणम् ॥

तत्पदं साध्ववस्थानाद्भिन्नग्रन्थ्यादिलक्षणम् ।
अन्वर्थयोगतस्तन्त्रे वेद्यसंवेद्यमुच्यते ॥ ७४ ॥

तत्पदमिति पदनात्पदमाशयः स्थानं साध्ववस्थानात्परिच्छेदा-त्सम्यगवस्थानेन भिन्नग्रन्थ्यादिलक्षणं भिन्नग्रन्थिदेशविरतिरूपम् । किमित्याह "अन्वर्थयोगतः" अन्वर्थयोगेन "तन्त्रे" सिद्धान्ते "वेद्यसंवेद्यमुच्यते" वेद्यं संवेद्यते[1] ऽनेनेति कृत्वा ॥

तस्मादन्यदाह–

अवेद्यसंवेद्यपदं विपरीतमतो मतम् ।
भवाभिनन्दिविषयं समारोपसमाकुलम् ॥ ७५ ॥

---

१ A. omits वेद्यं संवेद्यते

अवेद्यसवेद्यपद विपरीतमतो वेद्यसवेद्यपदान्मतमिष्टम् । तथाहि । अवेद्यमवेदनीय वस्तु स्थित्या न तथाभावयोगिसामान्येनाप्यविकल्पकज्ञानग्राह्य, तथाविधसमानपरिणामानुपपत्ते' । तत्सवेद्यते । अज्ञानावरणक्षयोपशमानुरूप निश्चयबुद्ध्योपप्लवसारया मृगतृष्णोदकवज्ज्ञायते यस्मिन्पदे तत्तथाविधम् । अत एवाह "भवाभिनन्दिविषय" एतद्भवाभिनन्दी वक्ष्यमाणलक्षण' । समारोपसमाकुलमिति मिथ्यात्वदोषतो ऽपायगमनाभिमुखेन तथापि गलितमित्यर्थ. ॥

भवाभिनन्दिलक्षणमाह ।

क्षुद्रो लाभरतिर्दीनो मत्सरी भयवान् शठ ।
अज्ञो भवाभिनन्दी स्यान्निष्फलारम्भसगत ॥७६॥

क्षुद्र कृपण. । लाभरतिर्याञ्चाशील । दीन सदैवाकल्याणदर्शी । मत्सरी परकल्याणदु स्थित । भयवान्नित्यभीत' । शठो मायावी । अज्ञो मूर्ख । भवाभिनन्दी ससारबहुमानी । स्यादेवभूतो निष्फलारम्भसगत सर्वत्रातत्त्वाभिनिवेशादिति ॥

यदि नामैव तत किमित्याह—

इत्यसत्परिणामानुविद्धो बोधो न सुन्दर ।
तत्सगादेव नियमाद्विपसंपृक्तकान्नवत् ॥ ७७ ॥

इत्येव भवाभिनन्दिपरिणामे सति, अस्यासत्परिणामत्वात् । असत्परिणामानुविद्धो बोध सामान्येन न सुन्दर' । कुत इत्याह "तत्सगादेव" विवक्षितासत्परिणामसबन्धादेव "नियमात्" नियमेन । किमिवेत्याह "विपसपृक्तकान्नवत्" इति निदर्शनमात्रम् ॥

फलत एतदेवाह ।

एतद्वन्तोऽत एवेह विपर्यासपरा नराः ।
हिताहितविवेकान्धा खिद्यन्ते सांप्रतेक्षिणः ॥७८॥

एतद्वन्तोऽवेद्यपदवन्तः । अत एव कारणात् । इह लोके विपर्यासपरा विपर्यासप्रधाना नराः । किमित्याह " हिताहितविवेकान्धाः " एतद्रहिता इत्यर्थः । अत एवाह " खिद्यन्ते सांप्रतेक्षिणः " वर्तमानदर्शिनः सन्त इति ॥

तथा च ।

जन्ममृत्युजराव्याधिरोगशोकाद्युपद्रुतम् ।
वीक्षमाणा अपि भवं नोद्विजन्तेऽतिमोहतः ॥७९॥

जन्म प्रादुर्भावलक्षणं, मृत्युः प्राणत्यागरूपः, जरा वयोहान्यात्मिका, व्याधिः कुष्ठादिलक्षणा, रोगो विशूचिकाद्यातङ्कः, शोक इष्टवियोगादिजो मनोविकारः, आदिशब्दाद्ग्रहादिपरिग्रहः, एभिरुपद्रुतं कदर्थितम् । वीक्षमाणा अपि पश्यन्तोऽपि सन्तः । भवं संसारं नोद्विजन्तेऽस्मादिति प्रक्रमः । अतिमोहतो हेतोरिति ॥

तथाह्यमीषां किमित्याह–

कुकृत्यं कृत्यमाभाति कृत्यं चाकृत्यवत्सदा ।
दुःखे सुखधियाकृष्टा कच्छूकण्डूयकादिवत् ॥८०॥

कुकृत्यं प्राणातिपातारम्भादि कृत्यमाभाति मोहात्, कृत्यं चाहिंसानारम्भादि चाकृत्यवत्सदाभाति मोहादेव । दुःखसमारम्भादौ सुखधिया सुखबुद्ध्या । आकृष्टा आकर्षिता । किंवदित्याह " कच्छूकण्डूयकादिवत् " कच्छूः पामा तस्याः कण्डूयकाः, कण्डूयन्त इति कण्डूयकाः; आदिशब्दात्कृमिपतृप्यमानाग्निसेवककुष्ठिपरिग्रहः ॥

अमुमेवार्थं स्पष्टयन्नाह—

**यथा कण्डूयनेष्वेषां धीर्न कच्छ्रे निवर्तते ।**
**भोगाङ्गेषु तथैतेषां न तदिच्छापरिक्षये ॥ ८१ ॥**

कस्यचित्कण्डूयकस्य कण्डूयनातिरेकात्परिक्षीणनखस्य सिकताक्षितिनिवासात्कथंचिदनुवाप्ततृणकण्डूविनोदकस्य भिक्षापुटिकायैर्गृहीततृणपूलकेन वैत्रपथिकेन दर्शनं बभूव । स तेन तृणमेकं याचितो दत्तं चानेन तत्तस्मै । परितुष्टोऽसौ हृदयेन चिन्तितं च सतोषं "अहो धन्यः खल्वयं यस्यैतावन्ति कण्डूयनानि" । पृष्टश्च स "क्व खल्वेतान्येवमतिप्रभूतान्यवाप्यन्ते" । तेनोक्तम् । "लाटदेशादौ । किं च तवैभिः प्रयोजनम्" । तेनोक्तम् । "कच्छूकण्डूविनोदम्" । पथिक आह । "यद्येवं, ततः किमेभिः । कच्छूमेव ते सप्तरात्रेणापनयामि कुरुष्व योगं त्रिफलायाः" । स पुनराह । "कच्छ्रूपगमे कण्डूविनोदाभावे किं फलं जीवितस्य[१] । तदलं त्रिफलया । क्वैतान्यवाप्यन्त इत्येतदेव कथय" इति श्लोकगर्भार्थः ॥ अक्षरगमनिका तु । यथा कण्डूयने तथा भवाभिनन्दिना धीर्न तदिच्छापरिक्षये न भोगेच्छानिवृत्तौ तत्त्वानभिज्ञतयैव च परिपाकेऽपि रागीरगणान्तरात् । इच्छाग्रहणमिह भोगक्रियोपलक्षणम् ॥

यतश्चैवमतः—

**आत्मानं पाशयन्त्येते सदासच्चेष्टया भृशम् ।**
**पापधूल्या जडाः कार्यमविचार्यैव तत्त्वतः ॥८३॥**

आत्मानं जीवं पाशयन्ति गुण्डयन्त्येते अदृष्टतत्त्वाः सर्वकालमसच्चेष्टया प्राणातिपातारम्भरूपया हेतुभूतया भृशमत्यर्थम् । कया

---

[१] A omit.

पाशयन्तीत्याह "पापधूल्या" ज्ञानावरणीयादिलक्षणया । जडा मन्दाः । कार्यमविचार्यैव तत्त्वतः परमार्थेन क्षणिककुसुखसक्ततयात्मानं पाशयन्तीति ॥

तथाहि–

धर्मबीजं परं प्राप्य मानुष्यं कर्मभूमिषु ।
न सत्कर्मकृषावस्य प्रयतन्तेऽल्पमेधसः ॥८३॥

धर्मबीजं धर्मकारणं परं प्रधानं प्राप्यासाद्य । किं तदित्याह "मानुष्यं" मानुषत्वं । क्वेत्याह "कर्मभूमिषु" भरताद्यासु । किमित्याह "न सत्कर्मकृषौ" धर्मबीजाधानादिरूपायां "अस्य" धर्मबीजस्य "प्रयतन्तेऽल्पमेधसः" अल्पमतय इत्यर्थः ॥

किं तर्हि–

बडिशामिषवत्तुच्छे[1] कुसुखे दारुणोदये ।
सक्तास्त्यजन्ति सच्चेष्टां धिगहो दारुणं तमः ॥८४॥

बडिशामिषवदिति[1] निदर्शनं मत्स्यगलमांसवत् । तुच्छेऽल्पे । कुसुखे दुष्टभोगजे दारुणोदये रौद्रविपाके समयपरिभाषेयम् । सक्ता गृध्राः । किमित्याह "त्यजन्ति सच्चेष्टां" धर्मसाधनम् । कर्मदोषोऽयमित्याह "धिगहो दारुणं तमः" कष्टमज्ञानमिति योऽर्थः ॥

उपसंहरन्नाह–

अवेद्यसंवेद्यपदमान्ध्यं दुर्गतिपातकृत् ।
सत्संगागमयोगेन जेयमेतन्महात्मभिः ॥८५॥

---

१ A C D बिडिं०

अवेद्यसवेद्यपदमुक्तलक्षणमान्यभावरूपम् । अत एवाह " दुर्गतिपातकृत् " दुर्गतिपातकरणशीलम् । सत्सगागमयोगेन विशिष्टसगागमसवन्धेनेत्यर्थः । एकवद्भाव' पुरुषप्राधान्यख्यापनपर । जेयमेतदवेद्यसवेद्यपद महात्मभि' पुभिः,[१] अस्यामेव भूमिकायामन्यदा जेतुमशक्यत्वात् । अत एवानुवादपरो ऽप्यागम इति योगाचार्या', अयोग्यनियोगासिद्धेरिति ॥

अत एव जयलिङ्गान्याह ।

जीयमाने च नियमादेतस्मिस्तत्त्वतो नृणाम् ।
निवर्तते स्वतो ऽत्यन्तं कुतर्कविषमग्रह ॥ ८६ ॥

जीयमाने च नियमादेतस्मिन्नवेद्यसवेद्यपदे महामिथ्यात्वनिबन्धने पशुत्वादिशब्दवाच्ये । तत्त्वत. परमार्थेन नृणा पुसा निवर्तते स्वत आत्मनैवापरोपदेशेन, निमित्ताभावे नैमित्तिकाभावात् । अत्यन्त नितरा सम्यग्ज्ञानयोगात्, आगमप्रामाण्यावगमात् । कुतर्कविषमग्रहो न्यायापायहेतुत्वेन ग्रह इव ग्रह ॥

किविशिष्टो ऽयमित्याह–

बोधरोग शमापाय श्रद्धाभङ्गो ऽभिमानकृत् ।
कुतर्कश्चेतसो व्यक्त भावशत्रुरनेकधा ॥ ८७ ॥

बोधरोगस्तत्त्वथावस्थितोपघातभावात् । शमापायो ऽसदभिनिवेशजनकत्वात् । श्रद्धाभङ्ग आगमार्थाप्रतिपत्ते' । अभिमानकृन्मिथ्याभिमानजनकत्वात् । एवं कुतर्क आगमनिरपेक्ष इत्यर्थ' । किमित्याह " चेतस " अन्तःकरणस्य " भावशत्रु' " परमार्थरिपु' ' अने-

---

[१] B omits

[२] B एव

कथा " आर्यापवादादिकारणेन ॥

यतश्चैवमतः किमित्याह–

कुतर्केऽभिनिवेशस्तन्न युक्तो मुक्तिवादिनाम् ।
युक्तः पुनः श्रुते शीले समाधौ च महात्मनाम् ॥८८॥

कुतर्क उक्तलक्षणे ऽभिनिवेशस्तथा तद्ग्रहरूपः । किमित्याह "न युक्तः"। केपामित्याह "मुक्तिवादिनां" संन्यासिनामित्यर्थः । युक्तः पुनः श्रुत आगमे शीले परद्रोहविरतिलक्षणे समाधौ च ध्यानफलभूते महात्मनां मुक्तिवादिनामभिनिवेशो युक्त इति ॥

बीजं चास्य परं सिद्धमवन्ध्यं सर्वयोगिनाम् ।
परार्थकरणं येन परिशुद्धमतोऽत्र च ॥ ८९ ॥

बीजं चास्य श्रुतादेः परं सिद्धं प्रधानं प्रतिष्ठितम् । अवन्ध्यं नियतफलदायि सर्वयोगिनां कुलयोगिप्रभृतीनाम् । किं तदित्याह " परार्थकरणं " परप्रयोजननिष्पादनं " येन " कारणेन "परिशुद्धं" अन्यथानुपपातेन । अतः कारणात् । अत्र च परार्थकरणे युक्तोऽभिनिवेश इति ॥

कुतर्कासारतामेवाभिधातुमाह–

अविद्यासंगताः प्रायो विकल्पाः सर्व एव यत् ।
तद्योजनात्मकश्चैष कुतर्कः किमनेन तत् ॥९०॥

अविद्यासंगता ज्ञानावरणीयादिसंपृक्ताः। प्रायो बाहुल्येन । विकल्पाः सर्व एव शब्दविकल्पा अर्थविकल्पाश्च यत्तद्योजनात्मको विकल्पयोजनात्मकश्चैष गोमयपायसादिविकल्पनेन कुतर्क उक्तलक्षणः । किमनेन तत् । न किंचिदित्यर्थः ॥

किं च–

जातिप्रायश्च सर्वोऽयं प्रतीतिफलबाधित ।
हस्ती व्यापादयत्युक्तौ प्राप्ताप्राप्तविकल्पवत् ॥९१॥

जातिप्रायश्च दूषणाभासप्रायश्च सर्वोऽय कुतर्क' । प्रतीतिफलबाधित इति कृत्वा । एतदेवाह " हस्ती व्यापादयत्युक्तौ " मेण्ठेन । किमिवेत्याह " प्राप्ताप्राप्तविकल्पवत् " इति । कश्चिन्नैयायिकोऽत्र कुतश्चिदागन्उत् । अवशीभूतमत्तहस्त्यारूढेन केनाचिदुक्त, "भो भो', त्वरितमपसर; हस्ती व्यापादयति " इति च । तथा परिणतन्यायशास्त्र आह " रे रे बठर किमेव युक्तिबाह्य मल्पसि । तथाहि । किमय प्राप्त व्यापादयति कि वाप्राप्तमिति । आद्यपक्षे भवत एव व्यापत्ति प्रसङ्ग', प्राप्तिभावात् " । एव यावदाह तावद्धस्तिना गृहीत स कथमपि मेण्ठेन मोचित इति । जातिप्रायता सर्वत्र भिन्नार्थग्रहणस्वभावसवेदनवेदने तद्गताकारविकल्पनस्यत्र प्रायत्वादिति चर्चितमन्यत्र ॥

किं च–

स्वभावोत्तरपर्यन्त एषोऽसावपि तत्त्वत ।
नार्वाग्दृग्गोचरो न्यायादन्यथान्येन कल्पित ॥९२॥

स्वभावोत्तरपर्यन्त एप कुतर्क । अत्र च वस्तुस्वभावैरुत्तर वाच्यमिति वचनात् । एवमग्निर्दहत्याप' क्लेदयन्तीति स्वभाव एषामिति । असावपि स्वभाव' । तत्त्वत' परमार्थेन । नार्वागोचरो न छद्मस्थाविपय । न्यायान्यायेन परमस्थिद्धेन । किंभूत सन्नित्याह " अन्यथा " प्रकारान्तरेण " अन्येन " वादिना " कल्पित " सन्निति । तथाहि । अथ वस्तुभावैरुत्तर वाच्यमिति सर्वेनैव तथा तत्तत्सिद्धौ वक्तु पार्यते । कथम् । येन तदर्थक्रियाकरणस्वभावस्तेन तां करोति न पुन. क्षणिकतया, तस्याः सर्वभावेष्वेवाभ्युपगमात् ।

यतः कुतश्चित्तदर्थक्रियाभावप्रसङ्गात्तन्निबन्धनाविशेषादिति । एवमग्निः क्लेदयत्यप्संनिधौ तथास्वभावत्वात् । तथापो दहन्त्यग्निसंनिधौ तथास्वभावत्वादेव । स्वभाववैचित्र्यात्तत्रापि लोकबाधामन्तरेणापरो वा स्वभावो दृष्टान्तमात्रस्य सर्वत्र सुलभत्वात् । तदेवमसमञ्जसकारी कुतर्क इत्यैदम्पर्यम् ॥

अमुमेवार्थं विशेषेणाभिधातुमाह–

**अतोऽग्निः क्लेदयत्यम्बुसंनिधौ दहतीति च ।**
**अम्ब्वग्निसंनिधौ तत्स्वाभाव्यादित्युदिते तयोः ॥१३॥**

यतो नार्वाग्दृग्गोचरोऽधिकृतस्वभावः, अतोऽस्मात्कारणात् । अग्निः क्लेदयति । अध्यक्षविरोधपरिहारायाह "अम्बुसंनिधौ" इति । दहति वाम्बु न प्रतीतिबाधेत्याह "अग्निसंनिधौ" इति । किमित्येतदेवमित्याह "तत्स्वाभाव्यात्तयोः" अग्न्यम्बुनोरिति । उदिते सत्यपि परवादिना ॥

किमित्याह–

**कोशपानादृते ज्ञानोपायो नास्त्यत्र युक्तितः ।**
**विप्रकृष्टोऽप्ययस्कान्तः स्वार्थकृद्दृश्यते यतः ॥१४॥**

कोशपानादृते कोशपानं विना ज्ञानोपायो नास्त्यत्र स्वभावव्यतिकरे युक्तितः शुष्कतर्कयुक्त्या कश्चिदपरो दृष्टान्तोऽप्यस्यार्थस्योपोद्बलको विद्यते एवेत्याह "विप्रकृष्टोऽप्ययस्कान्तः" लोहाकर्ष उपलविशेषः "स्वार्थकृत्" लोहाकर्षादिस्वकार्यकरणे शीलः "दृश्यते यतः" लोहे स हि विप्रकृष्ट एव संनिकृष्टलोहमेव न ताम्रादि आकर्षयत्येव न कर्तयति तदित्थमस्येवाग्न्यादीनां तथास्वभावकल्पनं केन बाध्यते । न केनचिदिति भावनीयम् ॥

उपसंहरन्नाह–

दृष्टान्तमात्रं सर्वत्र यदेवं सुलभं क्षितौ ।
एतत्प्रधानस्तर्केण स्वनीत्यापोह्यते ह्ययम् ॥९५॥

दृष्टान्तमात्र सा ये वस्तुनि लोकप्रतीतिबाधित सर्वत्राविशेषेण यदेवमुक्तनीत्या सुलभ क्षितौ पृथिव्याम् । एतत्प्रधानोऽयं कुतर्क केनापोह्यते नापोह्यते केनचित्स्वनीतिविरोधादित्यर्थः ॥

इदं दृष्टान्तमाह ।

द्विचन्द्रस्वप्नविज्ञाननिदर्शनबलोत्थित ।
निरालम्बनता सर्वज्ञानानां साधयन्यथा ॥ ९६ ॥

द्विचन्द्रस्वप्नविज्ञाननिदर्शनबलोत्थित इति निदर्शनमुदाहरणमेतत्सामर्थ्योपजात । निरालम्बनतामालम्बनशून्यता सर्वज्ञानाना मृगतृष्णादिगोचराणाम् । अविशेषेण सामान्येन साधयन्यथा केनापोह्यते ॥

न चैव तत्सिद्धिरित्याह–

सर्वं सर्वत्र चाप्नोति यदस्मादसमञ्जसम् ।
प्रतीतिबाधितं लोके तदनेन न किंचन ॥ ९७ ॥

सर्वं निरवशेषं साध्यमिति शेषः सर्वत्र च सर्वत्रैव वस्तुनि आप्नोति यदस्मात्कुतर्कादसमञ्जसमतिसमञ्जसं प्रतीतिबाधितं लोके तथाविधदृष्टान्तमात्रसाधकत्वात् । तदनेन किंचन कुतर्केण ॥

इतश्चैतदेवमित्याह–

अतीन्द्रियार्थसिद्ध्यर्थं यथालोचितकारिणाम् ।
प्रयासः शुष्कतर्कस्य न चासौ गोचरः क्वचित् ॥९८॥

अतीन्द्रियार्थसिद्ध्यर्थं अतीन्द्रियसिद्धिनिमित्तम् । यथालोचित

कारिणां प्रेक्षावतां प्रयासः प्रवृत्त्युत्कर्षः शुष्कतर्कस्याधिकृतस्य न चातीन्द्रियोऽर्थो गोचरो विषयः क्वचिदिति ॥

गोचरस्त्वागमस्यैव ततस्तदुपलब्धितः ।
चन्द्रसूर्योपरागादिसंवाद्यागमदर्शनात् ॥ ९९ ॥

गोचरस्तु गोचरः पुनरागमस्यैवातीन्द्रियोऽर्थः । कुत इत्याह "ततस्तदुपलब्धितः" आगमादतीन्द्रियार्थोपलब्धितः । एतदेवाह "चन्द्रसूर्योपरागादिसंवाद्यागमदर्शनात्" लौकिको ऽयमर्थ इति भावनीयम् ॥

उपसंहरन्नाह—

एतत्प्रधानः सच्छ्राद्धः शीलवान् योगतत्परः ।
जानात्यतीन्द्रियानर्थांस्तथा चाह महामतिः ॥१००॥

एतत्प्रधान इत्यागमप्रधानः, सच्छ्राद्धः प्राज्ञः, शीलवान् परद्रोहविरतिमान, योगतत्परः सदा तदभियुक्तः, एवंभूतः सन् जानात्यतीन्द्रियानर्थान् धर्मादीन् । तथा चाह महामतिः पतञ्जलिः ॥

किमित्याह—

आगमेनानुमानेन योगाभ्यासरसेन च ।
त्रिधा प्रकल्पयन्प्रज्ञां लभते तत्त्वमुत्तमम् ॥१०१॥

आगमेनाप्तवचनेन लक्षणेन । अनुमानेन लिङ्गाल्लिङ्गिज्ञानरूपेण योगाभ्यासरसेन च विहितानुष्ठानात्मकेन त्रिधा प्रकल्पयन्प्रज्ञामुक्तक्रमेणैव, अन्यथा हि प्रवृत्त्यसिद्धेः । किमित्याह "लभते तत्त्वमुत्तमं" पापसंमोहनिवृत्त्या श्रुतादिभेदेन ॥

अमुमेवार्थमाह ।

न तत्त्वतो भिन्नमता सर्वज्ञा बहवो यत ।
मोहस्तदविमुक्तीनां तद्भेदाश्रयण तत ॥१०२॥

न तत्त्वतः परमार्थेन भिन्नमता भिन्नाभिप्राया' सर्वज्ञा बहवो यतो यस्मात् । मोहस्तदविमुक्तीना सर्वातिशयश्राद्धाना तद्भेदाश्रयण सर्वज्ञभेदाङ्गीकरण ततस्तस्मादिति ॥

कथमित्याह–

सर्वज्ञो नाम य कश्चित्पारमार्थिक एव हि ।
स एक एव सर्वत्र व्यक्तिभेदेऽपि तत्त्वत· ॥१०३॥

सर्वज्ञो नाम य कश्चिदर्हदादि' पारमार्थिक एव हि निरुपचरित' स एक एव सर्वत्र' सर्वज्ञत्वेन व्यक्तिभेदे ऽपि तत्त्वत' । ऋषभादिल्क्षणे सति प्रतिपत्तिस्ततस्तस्य सामान्येनैव यावता ते सर्वे ऽपि तमापन्ना इति न्यायमति परा प्रतिपत्ति २ । ततस्तस्य सर्वज्ञस्य सामान्येनैव यावता तन्नान्तरीयाणामपि ते सर्वे ऽपि तमापन्ना' सर्वज्ञ मुख्यमेवेति न्यायगति परा, तमन्तरेण तत्प्रतिपत्तेरसिद्धे· ॥

विशेषस्तु पुनस्तस्य कार्त्स्न्येनासर्वदर्शिभि ।
सर्वैर्न ज्ञायते तेन तमापन्नो न कश्चन ॥१०४॥

विशेषस्तु भेद एव पुनस्तस्य सर्वज्ञस्य कार्त्स्न्येनासर्वदर्शिभि· प्रमातृभि सर्वैर्न विज्ञायते तदर्शनात्, दर्शने ऽपि तन्मानागत । तेन कारणेन न सर्वज्ञमापन्न प्रतिपन्नो न कश्चनासर्वदृशा ॥

तस्मात्सामान्यतो ऽप्येनमभ्युपैति य एव हि ।

---

१ C omits

२ C omit प्रतिपत्तिस्ततस्तस्य परा प्रतिपत्ति ।

निर्व्याजं तुल्य एवासौ तेनांशेनैव धीमताम् ॥१०५॥

तस्मात्सामान्यतोऽप्येनं सर्वज्ञमभ्युपैति य एव हि कश्चिदसर्वदर्शी निर्व्याजमौचित्ययोगेन तदुक्तपालनपरः । तुल्य एवासौ तेनांशेन सर्वज्ञप्रतिपत्तिलक्षणेन धीमतामनुपहतबुद्धीनामित्यर्थः ॥

अमुमेवार्थं निदर्शनगर्भमाह ।

यथैवैकस्य नृपतेर्बहवोऽपि[1] समाश्रिताः ।
दूरासन्नादिभेदेऽपि तद्भृत्याः सर्व एव ते ॥१०५॥

यथैवैकस्य नृपतेः कस्यचिद्विवक्षितस्य बहवोऽपि समाश्रिताः पुमांसो दूरासन्नादिभेदेऽपि सति तथा नियोगभेदे कृते तद्भृत्या विवक्षिता नृपभृत्याः सर्व एव ते समाश्रिता इति ॥

दार्ष्टान्तिकयोजनमाह ।

सर्वज्ञतत्त्वाभेदेन तथा सर्वज्ञवादिनः ।
सर्वे तत्तत्त्वगा ज्ञेया भिन्नाचारस्थिता अपि ॥१०६॥

सर्वज्ञतत्त्वाभेदेन यथोदितनीत्या हेतुभूतेन । तथा नृपतिसमाश्रितबहुपुरुषवत्सर्वज्ञवादिनः सर्वे जिनादिमतभेदावलम्बिनः । तत्तत्त्वगाः सर्वज्ञतत्त्वगा ज्ञेयाः । भिन्नाचारस्थिता अपि तथाधिकारभेदेनेति ॥

उपसंहरन्नाह–

न भेद एव तत्त्वेन सर्वज्ञानां महात्मनाम् ।
तथा नामादिभेदेऽपि भाव्यमेतन्महात्मभिः ॥१०७॥

न भेद एव तत्त्वेन परमार्थेन सर्वज्ञानां महात्मनां भावसर्वज्ञा-

[1] A omits

नामिन्यर्थः । तथष्टानिष्टनामादिभेदेऽपि सति भाव्यमेतन्महात्मभिः श्रुतमेधासमोहसारया प्रज्ञया ॥

शास्त्रगर्भमेवोपपत्त्यन्तरमाह ।

**चित्राचित्रविभागेन यच्च देवेषु वर्णिता ।**
**भक्तिः सद्योगशास्त्रेषु ततोऽप्येवमिदं स्थितम् ॥१०८॥**

चित्राचित्रविभागेन वक्ष्यमाणलक्षणेन यच्च देवेषु वर्णिता लोकपालमुक्तादिषु भक्तिः सद्योगशास्त्रेषु सेवा यात्माचिन्तागास्त्रेषु । ततोऽपि कारणादेवमिदं स्थितं प्रस्तुतमिति ॥

अमुमेवार्थं स्पष्टयन्नाह–

**संसारिषु हि देवेषु भक्तिस्तत्कायगामिनाम् ।**
**तदतीते पुनस्तत्त्वे तदतीतार्थयायिनाम् ॥१०९॥**

संसारादिषु हि देवेषु लोकपालादिषु भक्तिः सेवा तत्कायगामिनां संसारिदेवकायगामिनां तदतीते पुनः संसारातीते तु तत्त्वे तदतीतार्थयायिनां संसारातीतमार्गयायिनां योगिनां भक्तिः ॥

अनयोर्विशेषमाह ।

**चित्रा चाद्येषु तद्रागतदन्यद्वेषसंगता ।**
**अचित्रा चरमे त्वेषा शमसारखिलैव हि ॥११०॥**

चित्रा च नानाप्रकारा चाद्येषु सांसारिकेषु देवेषु[1] तद्रागतदन्यद्वेषसंगता स्वाभीष्टदेवतारागानभीष्टद्वेषसंयुक्ता मोहगर्भत्वात् । अचित्रैकाकारा चरमे तदतीते तु तत्त्वे एषा भक्तिः सा च शमसारा शमप्रधानाखिलैव हि तथासंमोहाभावादिति ॥

अत्रैव हेतुमाह ।

---

1 C omits

संसारिणां हि देवानां यस्माच्चित्राण्यनेकधा ।
स्थित्यैश्वर्यप्रभावाद्यैः स्थानानि प्रतिशासनम् ॥१११॥

संसारिणां हि देवानां लोकपालादीनां यस्माच्चित्राण्यनेकाकाराण्यनेकधानेकैः प्रकारैः । कैः कानीत्याह "स्थित्यैश्वर्यप्रभावाद्यैः" आदिशब्दात्सहजरूपादिपरिग्रहः "स्थानानि" विमानादीनि । प्रतिशासनं ब्रह्माण्डत्रैविध्यानुभेदात् ॥

यस्मादेवम्-

तस्मात्तत्साधनोपायो नियमाच्चित्र एव हि ।
न भिन्ननगराणां स्यादेकं वर्त्म कदाचन ॥११२॥

तस्मात्कारणात्साधनोपायः संसारिदेवस्थानसाधनोपायो नियमाच्चित्र एव हि भवति । इदमेव वस्तुलोकप्रसिद्धोदाहरणद्वारेणाह । न भिन्ननगराणां स्याद्भवेदेकं वर्त्म कदाचन तथा तद्भेदानुपपत्तेरिति॥

तथा-

इष्टापूर्तानि कर्माणि लोके चित्राभिसंधितः ।
नानाफलानि सर्वाणि द्रष्टव्यानि विचक्षणैः ॥११३॥

इष्टापूर्तानि कर्माणि वक्ष्यमाणलक्षणानि लोके प्राणिगणे चित्राभिसंधितः कारणात् । किमित्याह "नानाफलानि" चित्रफलानीति योऽर्थः सर्वाणि द्रष्टव्यानि, हेतुभेदात् । कैरित्याह "विचक्षणैः" विद्वद्भिरिति ॥

इष्टापूर्तस्वरूपमाह ।

ऋत्विग्भिर्मन्त्रसंस्कारैर्ब्राह्मणानां समक्षतः ।
अन्तर्वेद्यां हि यद्दत्तमिष्टं तदभिधीयते ॥ ११४ ॥

ऋत्विग्भिर्यज्ञाधिकृतैर्मन्त्रसंस्कारै करणभूतैर्ब्राह्मणानां समक्षत', तदन्येषामन्तर्वेद्या हि यत्त[1] हिरण्यादीष्ट तदभिधीयते, विशेषलक्षण योगात् ॥

तथा–

वापीकूपतडागानि देवतायतनानि च ।
अन्नप्रदानमेतत्तु पूर्त तत्त्वविदो विदु ॥११५॥

वापीकूपतडागानि लोकप्रसिद्धान्येव देवतायतनानि च वसति वासीनि तथान्नप्रदान लौकिकमेव । एतत्त्वेवभूत[2] किमित्याह " पूर्त तत्त्वविदो विदु' " इति पूर्तपरिभाषया तत्त्वविदो विदन्ति ॥

आन्तर हेतुमधिकृत्याह–

अभिसधे फल भिन्नमनुष्ठाने समेऽपि हि ।
परमो ऽत स एवेह वारीव कृषिकर्मणि ॥ ११६ ॥

अभिसधेस्तथाविधाशयलक्षणात् । किमित्याह[3] " फल भिन्न " ससारिदेवस्थानादि " अनुष्ठाने समेऽपि हि " तुल्यादौ । परमः प्रधान॰ । अत कारणात् । स एवाभिसधिरेव । इह फलसिद्धौ । किंवदित्याह " वारीव कृषिकर्मणि " इति दृष्टान्त परमो लोकरूढ्या॥

अभिसधिभेदनिबन्धनान्याह ।

रागादिभिरय चेह भिद्यते ऽनेकधा नृणाम् ।
नानाफलोपभोक्तॄणां तथा बुद्ध्यादिभेदत ॥११७॥

---

[1] C omits हि यत्त

[2] B एतच्चैव॰

[3] A omits

रागादिभिर्दोषैरयं चाभिसंधिरिह लोके भिद्यते ऽनेकधा नृणां तन्मृदुमध्याधिमात्रभेदेन । किंविशिष्टानामित्याह " नानाफलोपभोक्तृणां तथा बुद्ध्यादिभेदतः " वक्ष्यमाणाद्भिद्यते ऽभिसंधिरिति ॥

एतमेवाह ।

**बुद्धिर्ज्ञानमसंमोहस्त्रिविधो बोध इष्यते ।**
**तद्भेदात्सर्वकर्माणि भिद्यन्ते सर्वदेहिनाम् ॥ ११८ ॥**

बुद्धिर्वक्ष्यमाणलक्षणा ज्ञानमप्येवमेवासंमोहश्चैवं त्रिविधो बोध इष्यते शास्त्रेषु । तद्भेदाद्बुद्ध्यादिभेदात्सर्वकर्माणीष्टादीनि भिद्यन्ते सर्वदेहिनां, तद्धेतुभेदात्फलभेद इति कृत्वा ॥

तत्र–

**इन्द्रियार्थाश्रया बुद्धिर्ज्ञानं त्वागमपूर्वकम् ।**
**सदनुष्ठानवच्चैतदसंमोहो ऽभिधीयते ॥ ११९ ॥**

इन्द्रियार्थाश्रया बुद्धिस्तीर्थयात्रादर्शने तद्गमनबुद्धिवत् । ज्ञानं त्वागमपूर्वकं तीर्थयात्राविधिविज्ञानवत् [१]सदनुष्ठानवच्चैतज्ज्ञानम् । किमित्याह " असंमोहो ऽभिधीयते " बोधराज इति ।

एवमेतेषां लक्षणे व्यवस्थिते सति लोकसिद्धमुदाहरणमाह ।

**रत्नोपलम्भतज्ज्ञानतत्प्राप्त्यादि यथाक्रमम् ।**
**इहोदाहरणं साधु ज्ञेयं बुद्ध्यादिसिद्धये ॥ १२० ॥**

रत्नोपलम्भः सामान्येनेन्द्रियार्थाश्रया बुद्धिः, तज्ज्ञानं त्वागमपूर्वकं रत्नज्ञानं, तत्प्राप्त्यादि त्वसंमोहः, बोधगर्भत्वादस्य यथाक्रमम् । इह बुद्ध्यादौ । उदाहरणं साधु, अभिमेतार्थसाधकत्वात् । अत एवाह " ज्ञेयं बुद्ध्यादिसिद्धये " बुद्धिज्ञानासंमोहासिद्ध्यर्थमिति[२] ॥

---

१ B ( pr ənit सदनुष्ठानवत्

२ A बुद्ध्यादेर्ज्ञाना॰

सदनुष्ठानलक्षणमाह ।

आदरः करणे प्रीतिरविघ्नः संपदागमः ।
जिज्ञासा तन्निसेवा च सदनुष्ठानलक्षणम् ॥१२१॥

आदरो यत्नातिशय इष्टादौ करणे । प्रीतिरभिष्वङ्गात्मिका । अविघ्नस्तत्करण एवाद्दृष्टमाहात्म्यात् । संपदागमः । तत एव शुभभावपुण्यसिद्धेर्जिज्ञासेष्टादिगोचरैव तन्निसेवा चेष्टोदिता सेवा, चशब्दात्तदनुग्रहग्रहः । एतत्सदनुष्ठानलक्षणं, अनुबन्धसारत्वादस्य ॥

तत्र–

बुद्धिपूर्वाणि कर्माणि सर्वाण्येवेह देहिनाम् ।
संसारफलदान्येव विपाकविरसत्वतः ॥१२२॥

बुद्धिपूर्वाणि कर्माणि[1] सर्वाण्येव सामान्येनेह लोके देहिनां प्राणिनाम् । किमित्याह "संसारफलदान्येव" अज्ञानपूर्वकत्वात्[2] । तथा चाह "विपाकविरसत्वतः" इति, तेषां नियोगत एव विपाकविरसत्वादिति ॥

ज्ञानपूर्वाणि तान्येव मुक्तयङ्गं कुलयोगिनाम् ।
श्रुतशक्तिसमावेशादनुबन्धफलत्वतः ॥ १२३ ॥

ज्ञानपूर्वाणि यथोदितज्ञाननिबन्धनानि तान्येव कर्माणि । किमित्याह "मुक्तयङ्गं" भवन्ति "कुलयोगिनां" वक्ष्यमाणलक्षणानाम् । कुलयोगिग्रहणमन्यासंभवज्ञापनार्थम् । कुत इत्याह "श्रुतशक्तिसमावेशात्" हेतोः । अमृतशक्तिस्तस्येव नेतद्भावे मुख्यं कुलयोगित्वम् । अत एवाह "अनुबन्धफलत्वतः" मुक्तयङ्गसिद्धेः तानिरानुबन्धत्वादिति ॥

---

[1] D omits

[2] A ज्ञान

असंमोहसमुत्थानि त्वेकान्तपरिशुद्धितः ।
निर्वाणफलदान्याशु भवातीतार्थयायिनाम् ॥ १२४ ॥

असंमोहसमुत्थानि पुनर्यथोदितासंमोहनिबन्धनानि तु । एकान्तपरिशुद्धितः कारणात्, परिपाकवशेन । किमित्याह "निर्वाणफलदान्याशु" शीघ्रं तान्येव कर्माणि । केषामित्याह "भवातीतार्थयायिनां" सम्यक्परतत्त्ववेदिनामित्यर्थः ॥

एतेषामेव लक्षणमाह ।

प्राकृतेष्विह भावेषु येषां चेतो निरुत्सुकम् ।
भवभोगविरक्तास्ते भवातीतार्थयायिनः ॥ १२५ ॥

प्राकृतेष्विह भावेषु शब्दादिषु बुद्धिपर्यवसानेषु येषां चेतो निरुत्सुकं, निःसङ्गतासमावेशात् । भवभोगविरक्ता अत एवंभूता जीवा मुक्तकल्पा भवातीतार्थयायिन उच्यन्ते, भवचित्तासंस्पर्शादिति ॥

एक एव तु मार्गोऽपि तेषां शमपरायणः ।
अवस्थाभेदभेदेऽपि जलधौ तीरमार्गवत् ॥ १२६ ॥

एक एव तु मार्गो ऽपि चित्तविशुद्धिलक्षणः । तेषां भवातीतार्थयायिनां शमपरायणः शमनिष्ठः । अवस्थाभेदभेदेऽपि गुणस्थानकभेदापेक्षया । जलधौ तीरमार्गवदिति निदर्शनम् । अवस्थाभेदश्चेह तद्दूरासन्नतादिभेदेन ॥

परतत्त्वाभिधित्सयाह–

संसारातीततत्त्वं तु परं निर्वाणसंज्ञितम् ।
तद्ध्येकमेव[1] नियमाच्छब्दभेदे ऽपि तत्त्वतः ॥१२७॥

---

१ B C तथैकमेव

'ससारातीततत्त्व त्विति' ससारातीत पुनस्तत्त्वम् । किमित्याह "पर" प्रधान "निर्वाणसज्ञित" निर्वाणसंज्ञा सजातास्येति कृत्वा। तद्[1]्येकमेव सामान्येन नियमान्नियमेन शब्दभेदेऽपि वक्ष्यमाणलक्षणे सति तत्त्वत' परमार्थेन ॥

एतदेवाह ।

सदाशिव परं ब्रह्म सिद्धात्मा तत्तथेति च ।
शब्दैस्तदुच्यतेऽन्वर्थादेकमेवैवमादिभि ॥ १२८ ॥

सदाशिव इति सर्वकाल शिवो न कदाचिदप्यशिवः, त्रिकाल-परिशुद्धेः सर्वाशिवाभावात् । पर प्रधान ब्रह्म तथा बृहत्त्वबृंहकत्वाभ्या सद्भावालम्बनत्वात् । सिद्धात्मा कृतकृत्यात्मा निष्ठितार्थ इत्यर्थः । तथातेति च । आकाल तथाभावात् । यथोक्तम् ।

उपादाननिमित्ताभ्यामधिकारित्वता ध्रुवा ।
सर्वकाल तथाभावात्तथातेत्यभिधीयते ॥ १ ॥[2]
विसयोगात्मिका चेय त्रिदु सपरिवर्जिता ।
भूतकोटि. परात्यन्त भूतार्थफलदेति च ॥ २ ॥

इत्यादिशब्दैस्तन्निर्वाणमुच्यते । अन्वर्थादन्वर्थेनोक्तनीत्या । एकमेव सर्वैरमादिभिरिति ॥

कथमेवेत्याह ।

तल्लक्षणाविसवादान्निराबाधमनामयम् ।
निष्क्रियं च परं तत्त्व यतो जन्माद्ययोगत ॥१२९॥

तल्लक्षणाविसवादादिति निर्वाणलक्षणाविसवादात् । एतमेवाह

---

१ B तथैकमेव

२ C omits this श्लोक

"निराबाधं" निर्गतमाबाधाभ्यः "अनामयं" अविद्यमानद्रव्यभावरोगम्। निष्क्रियं च कर्तव्याभावान्निबन्धनाभावेन[१]। परं तत्त्वमेवंभूतम्। यतो यस्मात्। जन्माद्ययोगतो जन्मजरामरणाद्ययोगेन ॥

ऐदम्पर्यमाह।

ज्ञाते निर्वाणतत्त्वे ऽस्मिन्नसंमोहेन तत्त्वतः।
प्रेक्षावतां न तद्भक्तौ विवाद उपपद्यते ॥ १३० ॥

ज्ञाते[२] परिच्छिन्ने निर्वाणतत्त्वे ऽस्मिन्नेवंभूते ऽसंमोहेन बोधेन तत्त्वतः परमार्थतः। किमित्याह "प्रेक्षावतां" बुद्धिमतां "न तद्भक्तौ" न निर्वाणतत्त्वसेवायाम्। किमित्याह "विवाद उपपद्यते" तत्त्वज्ञानभेदाभावात्, अन्यथा प्रेक्षावत्त्वविरोधादिति ॥

सर्वज्ञपूर्वकं चैतन्नियमादेव यत्स्थितम्।
आसन्नो ऽयमृजुर्मार्गस्तद्भेदस्तत्कथं भवेत् ॥१३१॥

सर्वज्ञपूर्वकं चैतदविकृततत्त्वं निर्वाणाख्यम्। नियमादेव यत्स्थितमसर्वज्ञस्य निर्वाणानुपपत्तेः। आसन्नोऽयं निर्वाणस्य सर्वज्ञलक्षण ऋजुरवक्रो मार्गः पन्थाः। तद्भेदः सर्वज्ञभेदो मतभेदलक्षणः। तत्तस्मात्। कथं भवेन्नैव भवतीति ॥

देशनाभेदः कथमित्याशंक्याह।

चित्रा तु देशनैतेषां स्याद्विनेयानुगुण्यतः।
यस्मादेते महात्मानो भवव्याधिभिषग्वराः ॥ १३२ ॥

चित्रा तु नानाप्रकारा पुनर्देशना "नित्य आत्मा अनित्य इति

१ A ०वन्धनभावेन

२ C omits

च " इत्यादिरूपा । एतेषा सर्वज्ञाना कपिलसुगतादीना स्याद्भव-द्विनेयानुगुण्यतस्तथाविधशिष्यानुगुण्येन कालान्तरापायभीरुमधिकृत्यो-पसर्जनीकृतपर्याया द्रव्यप्रधाना नित्यदेशना, भोगास्थावतस्त्वधिकृत्यो-पसर्जनीकृतद्रव्या पर्यायप्रधाना अनित्यदेशना। न तु ते ऽन्वयव्यतिरेक-वद्वस्तुवेदिनो न भवन्ति, सर्वज्ञत्वानुपपत्तेः । एव देशना तु तथा गुणदर्शनेनादुष्टेरित्याह[1] " यस्मादेते महात्मान " सर्वज्ञा. । किमि-त्याह " भवव्याधिभिषग्वरा. " ससारव्याधिवैद्यप्रधाना. ॥

अतः किमित्याह ।

यस्य येन प्रकारेण बीजाधानादिसंभव. ।
सानुबन्धो भवत्येते तथा तस्य जगुस्तत ॥ १३३ ॥

यस्य प्राणिनो येन प्रकारेण नित्यदेशनादिलक्षणेन बीजाधाना दिसभवस्तथा भवोद्वेगादिभाविन सानुबन्धो भवति तथा तथोत्तरगुण वृद्ध्या। एते सर्वज्ञाः । तथा तेन प्रकारेण । तस्य जगुर्गीतवन्तस्तत इति ॥

परिहारान्तरमाह ।

एकापि देशनैतेषां यद्वा श्रोतृविभेदत ।
अचिन्त्यपुण्यसामर्थ्यात्तथा चित्रावभासते ॥ १३४ ॥

एकापि देशना तन्मुखविनिर्गममधिकृत्य । एतेषा सर्वज्ञाना यद्वा श्रोतृविभेदतस्तथाभव्यत्वभेदेन । अचिन्त्यपुण्यसामर्थ्यात्परबोधा-श्रयोपात्तकर्मविपाकादित्यर्थ । तथा नित्यादिप्रकारेण चित्रावभासत इति ॥

---

१ B एव देशना तु तद्गुणदर्श०

न च नैवमपि गुण इत्याह ।

यथाभव्यं च सर्वेषामुपकारो ऽपि तत्कृतः ।
जायते ऽवन्ध्यताप्येवमस्याः सर्वत्र सुस्थिता ॥१३५॥

यथाभव्यं भव्यसदृशं च सर्वेषामुपकारोऽपि गुणो ऽपि तत्कृतो देशनानिष्पन्नः । जायते प्रादुर्भवति । अवन्ध्यताऽनिष्फलताप्येवमुक्तनीत्याऽस्याः देशनायाः[1] सर्वत्र सुस्थितेति ॥

प्रकारान्तरमाह ।

यद्वा तत्तन्नयापेक्षा तत्कालादिनियोगतः ।
ऋषिभ्यो देशना चित्रा तन्मूलैषापि तत्त्वतः ॥१३६॥

यद्वा तत्तन्नयापेक्षा द्रव्यास्तिकादीनधिकृत्य तत्कालादिनियोगतो दुःषमादियोगात् । ऋषिभ्यः कपिलादिभ्य एव देशना चित्रेति । न चेयमपि निर्मूलेत्याह " तन्मूलैषापि " सर्वज्ञदेशनामूलैषापि " तत्त्वतः " परमार्थेन तत्प्रवचनानुसारतस्तथाप्रवृत्तेरिति ॥

प्रकृतर्षिभ्यो[2] योजनमाह ।

तदभिप्रायमज्ञात्वा न ततोऽर्वाग्दृशां सताम् ।
युज्यते तत्प्रतिक्षेपो महानर्थकरः परः ॥ १३७ ॥

तदभिप्रायं सर्वज्ञाभिप्रायमज्ञात्वा । न ततः कारणात् । अर्वाग्दृशां सतां प्रमातॄणाम् । किमित्याह " युज्यते तत्प्रतिक्षेपः " किं-

---

१ B C ०नीत्या स्याद्देशनायाः

२ A C प्रकृतिर्षि०

विशिष्ट इत्याह "महानर्थकरः परः" महानर्थकरणशीलः "परः" प्रधान इति ॥

इहैव निदर्शनमाह–

निशानाथप्रतिक्षेपो यथान्धानामसङ्गतः ।
तद्भेदपरिकल्पश्च तथैवार्वाग्दृशामयम् ॥ १३८ ॥

निशानाथप्रतिक्षेपश्चन्द्रप्रतिक्षेपः । यथान्धानां चक्षुर्विकलानां मसङ्गतो नीत्या तद्भेदपरिकल्पश्च निशानाथभेदपरिकल्पश्च चक्रचतुरस्रत्वादि । तथैवार्वाग्दृशां छद्मस्थानामयं सर्वज्ञप्रतिक्षेपः, तद्भेदपरिकल्पश्चासङ्गत इति ॥

किं च–

न युज्यते प्रतिक्षेपः सामान्यस्यापि सत्सताम् ।
आर्यापवादस्तु पुनर्जिह्वाछेदाधिको मतः ॥१३९॥

न युज्यते प्रतिक्षेपो निराकरणरूपः सामान्यस्यापि कस्यचित्पुरुषादेः । तत्तस्मात् । सतां मुनीनाम् । आर्यापवादस्तु पुनः सर्वज्ञपरिभव इत्यर्थः । किमित्याह "जिह्वाछेदाधिको मतः" तथाविधप्रत्यपायभावेन ॥

किंच–

कुदृष्ट्यादिवन्नो सन्तो भाषन्ते प्रायसः क्वचित् ।
निश्चितं सारवच्चैव किं तु सत्त्वार्थकृत्सदा ॥ १४० ॥

कुदृष्ट्यादिवत्कुत्स्यमित्यादि नो सन्तो मुनयो भाषन्ते क्वचित् । कथं तर्हि भाषन्त इत्याह "निश्चितं" असंदिग्धं "सारवच्चैव" नापार्थकम् । "किं तु सत्त्वार्थकृत्" परार्थकरणशीलं "सदा" भाषन्ते ॥

उपसंहरन्नाह–

निश्चयोऽतीन्द्रियार्थस्य योगिज्ञानादृते न च ।
अतोऽप्यत्रान्धकल्पानां विवादेन न किंचन ॥१४१॥

निश्चयोऽतीन्द्रियार्थस्य सर्वज्ञादेर्योगिज्ञानादृते न च । तत एव तत्सिद्धेरतोऽपि कारणादत्र सर्वज्ञाधिकारेऽन्धकल्पानां विशेषतस्तदृत-त्त्वदर्शिनां विवादेन न किंचन सचित्तनाशफलेन ॥

न चानुमानविषय एषोऽर्थस्तत्त्वतो मतः ।
न चातो निश्चयः सम्यगन्यत्राप्याह[1] धीधनः ॥१४२॥

न चानुमानविषयो न च युक्तिगोचर एषोऽर्थः सर्वज्ञविशेषलक्ष-णस्तत्त्वतो मतः परमार्थेन दृष्टः । न चातोऽनुमानान्निश्चयः सम्यग-न्यत्रापि सामान्यार्थे । आह धीधनः स भर्तृहरिः ॥

किमाहेत्याह–

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥ १४३ ॥

यत्नेनानुमितोऽप्यर्थोऽन्वयाद्यनुसारेण कुशलैरनुमातृभिरन्वया-दिज्ञैरभियुक्ततरैरन्यैरन्वयादिज्ञैरेव । अन्यथैवोपपाद्यते ऽतथासि-द्ध्यादिप्रकारेण[2] ॥

अभ्युच्चयमाह–

ज्ञायेरन्हेतुवादेन पदार्था यद्यतीन्द्रियाः ।

---

१ A omits अपि

२ B तथासिद्धा०

कालेनैतावता प्राज्ञैः कृतः स्यात्तेषु निश्चयः ॥१४४॥

ज्ञायेरन्हेतुवादेनानुमानवादेन पदार्था यद्यतीन्द्रियाः सर्वज्ञादयः कालेनैतावता प्राज्ञैस्तार्किकैः कृतः स्यात्तेषु निश्चयोऽनागमः इति ॥

न चैतदेवं यत्तस्माच्छुष्कतर्कग्रहो महान् ।
मिथ्याभिमानहेतुत्वात्त्याज्य एव मुमुक्षुभिः ॥१४५॥

न चैतदेवं यद्येन कारणेन[1] तस्माच्छुष्कतर्कग्रहो महानतिरौद्रः । मिथ्याभिमानहेतुत्वात्कारणात्त्याज्य एव मुमुक्षुभिर्मोक्तुमिच्छुभिः ॥

किं च-

ग्रहः सर्वत्र तत्त्वेन मुमुक्षूणामसंगतः ।
मुक्तौ धर्मा अपि प्रायस्त्यक्तव्याः किमनेन तत् ॥१४६॥

ग्रहः सर्वत्र वस्तुनि तत्त्वेन परमार्थेन मुमुक्षूणामसंगतोऽयुक्तः । कुत इत्याह "मुक्तौ धर्मा अपि प्रायस्त्यक्तव्याः" प्रायोग्रहणं क्षायिकधर्मव्यवच्छेदार्थम् । किमनेन ग्रहेण तत् ? न किंचिदित्यर्थः ॥

यत एवम्-

तदत्र महतां वर्त्म समाश्रित्य विचक्षणैः ।
वर्तितव्यं यथान्यायं तदतिक्रमवर्जितैः ॥ १४७ ॥

तदत्र व्यतिकरे महतां वर्त्म समाश्रित्याङ्गीकृत्य विचक्षणैः पण्डितैर्वर्तितव्यं यथान्यायं तदतिक्रमवर्जितैर्महद्धर्मातिचाररहितैः ॥

एतदेवाह-

---

[1] B D प्रकारेण

परपीडेह सूक्ष्मापि वर्जनीया प्रयत्नतः ।
तद्वत्तदुपकारेऽपि यतितव्यं सदैव हि ॥१४८॥

परपीडा परबाधेह लोके सूक्ष्माप्यास्तां महतीति । किमित्याह "वर्जनीया" परित्यक्तव्या "प्रयत्नतः" सूक्ष्माभोगेन । तद्वत्प्रयत्नत एव तदुपकारेऽपि यतितव्यमनुष्ठानद्वारेण सदैव हीति ॥

तथा–

गुरवो देवता विप्रा यतयश्च तपोधनाः ।
पूजनीया महात्मानः सुप्रयत्नेन चेतसा ॥१४९॥

गुरवो मातापितृप्रमुखाः, देवता सामान्येनैव, विप्रा द्विजाः, यतयश्च प्रव्रजिताश्च तपोधनाः तद्वन्तः पूजनीया महात्मानः सर्व एवैते यथार्हम् । कथमित्याह "सुप्रयत्नेन चेतसा" आज्ञाप्रधानेनेत्यर्थः ॥

किं च–

पापवत्स्वपि चात्यन्तं स्वकर्मनिहतेष्वलम् ।
अनुकम्पैव सत्त्वेषु न्याय्या धर्मोऽयमुत्तमः ॥१५०॥

पापवत्स्वपि चात्यन्तं लुब्धकादिषु स्वकर्मनिहतेष्वलमत्यर्थमनुकम्पैव सत्त्वेषु न्याय्या न मत्सरो धर्मोऽयमुत्तमः कारणे कार्योपचारादिति ॥

उपसंहरन्नाह–

कृतमत्र प्रसङ्गेन प्रकृतं प्रस्तुमोऽधुना ।
तत्पुनः पञ्चमी तावद्योगदृष्टिर्महोदया ॥१५१॥

कृत पर्याप्तमत्र व्यतिकरे प्रसङ्गेन प्रकृत प्रस्तुमोऽधुना साम्प्रत तत्पुन' प्रकृत 'पञ्चमी तावद्योगदृष्टि"[1] स्थिराख्या। किंविशिष्टेत्याह "महोदया" निर्वाणपरमफलेत्यर्थः ।

एव समपञ्च चतुर्थी दृष्टिमभिधाय पञ्चमीमभिधातुमाह ।

स्थिरायां दर्शन नित्यं प्रत्याहारवदेव च ।
कृत्यमभ्रान्तमनघ सूक्ष्मबोधसमन्वितम् ॥ १५२ ॥

स्थिराया दृष्टौ दर्शन बोधलक्षण नित्यमप्रतिपाति निरतिचारायाम् । सातिचाराया तु प्रक्षीणनयनपटलोपद्रवस्य तदुक्तोपायानवबोधकल्पमनित्यमपि भवति, तथाभिचारभावात् । रत्नप्रभायामपि धूल्यादेरुपद्रवः प्रत्याहारवदेव च स्वविषयासम्प्रयोगे स्वचित्तस्वरूपानुकारी चेन्द्रियाणा प्रत्याहारः । तद्वदेतद्दर्शन कृत्य वन्दनादि । अभ्रान्त क्रममधिकृत्य । अत एवानघमनतिचारत्वात् । एतदेव विशेष्यते "सूक्ष्मबोधसमन्वित' ग्रन्थिभेदाद्वेद्यसवेद्यपदोपपत्तेरिति ॥

बालधूलीगृहक्रीडातुल्यास्यां भाति धीमताम् ।
तमोग्रन्थिविभेदेन भवचेष्टाखिलैव हि ॥ १५३ ॥

बालधूलीगृहक्रीडातुल्या प्रकृत्यसुन्दरत्वास्थिरत्वाभ्यामस्या स्थिराया दृष्टौ भाति धीमता पुसा, तमोग्रन्थिविभेदेन हेतुना भवचेष्टाखिलैव हि चक्रवर्त्यादिचेष्टारूपापि प्रकृत्यसुन्दरत्वादस्थिरत्वाच ॥

मायामरीचिगन्धर्वनगरस्वप्नसंनिभान् ।
बाह्यान् पश्यति तत्त्वेन भावान् श्रुतविवेकत ॥१५४॥

---

१ B adds महोदया.

२

मायामरीचयो मृगतृष्णिका गन्धर्वनगरं हरिश्चन्द्रपुरादि स्वप्नः प्रतीत एव, एतत्संनिभानेतदाकारान् बाह्यान् देहगृहादीन् पश्यति तत्त्वेन परमार्थेन भावान्पदार्थान्। कुत इत्याह[1] श्रुतविवेकतः सम्यक्परिणतेन श्रुतज्ञानेन ॥

अबाह्यं केवलं ज्योतिर्निराबाधमनामयम्[2] ।
यदत्र तत्परं तत्त्वं शेषः पुनरुपप्लवः ॥ १५५ ॥

अबाह्यमान्तरं केवलमेकं ज्योतिर्ज्ञानमनाबाधममूर्ततया पीडारहितमनामयमरोगम्। अत एव यदत्र लोके परं तत्त्वं वर्तते सदा तथाभावात्। शेषः पुनरुपप्लवस्तथा स्वरूपेण भावादिति ॥

एवं विवेकिनो धीराः प्रत्याहारपरास्तथा ।
धर्मबाधापरित्यागयत्नवन्तश्च तत्त्वतः ॥ १५६ ॥

एवमुक्तनीत्या विवेकिन एते धीरा अचपलाः प्रत्याहारपरा उक्तलक्षणप्रत्याहारप्रधानाः। तथा तेन प्रकारेण। धर्मबाधापरित्यागयत्नवन्तश्च तत्त्वत एवमुक्तनीत्या विवेकेन परिशुद्धेस्तत्त्वतः परमार्थेन ते हि[3] भिन्नग्रन्थित्वादुत्तमश्रुतप्रधाना इत्येवमालोचयन्ति ॥

न ह्यलक्ष्मी सखी लक्ष्मीर्यथानन्दाय धीमताम् ।
तथा पापसखा लोके देहिनां भोगविस्तरः ॥ १५७ ॥

न हि नैवालक्ष्मी सखी लक्ष्मीस्तथोभयपरिभोगेन यथान-

१ A D insert श्रुत इति

२ A D बाधं निरामयम्

३ B C read धर्मबाधापरित्यागप्रयत्नवन्तश्च तथान्तःपरिशुद्धिस्तत्त्वतः परमार्थेन ते हि ।

न्दाय धीमता तथा पापसखा लोके तदविनाभावेन देहिना भोगविस्तरो नानन्दाय नानुपहत्य भूतानि भोगः सन् भवति भूतोपघाताच्च पापमिति भावना ॥

धर्मभोग. सुन्दर इत्यप्याशङ्कापोहायाह ।

धर्मादपि भवन् भोग प्रायोऽनर्थाय देहिनाम् ।
चन्दनादपि संभूतो दहत्येव हुताशन ॥ १५८ ॥

धर्मादपि भवन् भोगो देवलोकादौ प्रायो बाहुल्येनानर्थाय देहिना तथा प्रमादविधानात् । प्रायोग्रहण शुद्धधर्माक्षेपि भोगनिरासार्थं, तस्य प्रमादजीवत्वायोगात्, अत्यन्तानवद्यतीर्थंकरादिफलशुद्धेः पुण्यशुद्धयादावागमाभिनिवेशाद्धर्मसारचित्तोपपत्तेरिति । सामान्यतो दृष्टान्तमाह " चन्दनादपि सभूत. " तथा शेत्यजनकेऽपि । किमित्याह " दहत्येव हुताशन' " तथास्वभावत्वात् । प्राय एतदेव न दहत्यपि कश्चित्सत्यमन्त्राभिसंस्कृतादाहासिद्धे । सकललोकसिद्धमेतम्मिति ॥

तथा– ।

भोगात्तदिच्छाविरति स्कन्धभारापनुत्तये ।
स्कन्धान्तरसमारोपस्तत्संस्कारविधानत ॥ १५९ ॥

भोगात्सकाशात्तदिच्छाविरतिर्भोगेच्छाविरतिस्तात्कालिकी[१] । किमित्याह "स्कन्धभारापनुत्तये" स्कन्धभारापनुत्त्यर्थ "स्कन्धान्तरसमारोप "वर्तते। कुत इत्याह "तत्संस्कारविधानतः" तथाकर्मवन्धेनानिष्टभोगसंस्कारविधानात्तत्त्वतस्तदिच्छानिवृत्तेरित्युक्ता पञ्चमी

१ A omits भोगेच्छाविरतिः

दृष्टिः। सत्यामस्यामपरैरपि योगाचार्यैरलौल्यादयो गुणाः[१] प्रोच्यन्ते। यथोक्तम्।

अलौल्यमारोग्यमनिष्ठुरत्वं। गन्धः शुभो मूत्रपुरीषमल्पम्॥
कान्तिः प्रसादः स्वरसौम्यता च। योगप्रवृत्तेः प्रथमं हि चिह्नम्॥१॥
मैत्र्यादियुक्तं विषयेष्वचेतः। प्रभाववद्धैर्यसमन्वितं च॥
द्वन्द्वैरधृष्यत्वमभीष्टलाभः। जनप्रियत्वं[२] च तथापरं स्यात्॥ २॥
दोषव्यपायः परमा च तृप्ति[३]-रौचित्ययोगः समता च गुर्वी।
वैरादिनाशोऽथ ऋतंभरा धी-र्निष्पन्नयोगस्य तु चिह्नमेतत्[४]॥३॥इत्यादि॥

इहाप्येतदकृत्रिमं गुणजातम्। अत एवारभ्य विज्ञेयम्। तथा च षष्ठीं दृष्टिमभिधातुमाह।

**कान्तायामेतदन्येषां प्रीतये धारणा परा।**
**अतोऽत्र नान्यमुन्नित्यं मीमांसास्ति हितोदया॥१६०॥**

कान्तायां दृष्टावेतदनन्तरोदितं नित्यदर्शनादि। अन्येषां प्रीतये भवति न तु द्वेषाय। तथा धारणा परा प्रधाना चित्तस्य देशबन्धलक्षणा। यथोक्तम्। "देशसंबन्धश्चित्तस्य धारणा ३-१ पा"। अतो धारणातः। अत्र दृष्टौ नान्यमुन्नान्यत्र हर्षः, तदा[५] तत्तत्प्रतिभासायोगात् तथा नित्यं सर्वकालं मीमांसास्ति सद्विचारात्मिका। अत एवाह "हितोदया" सम्यग्ज्ञानफलत्वेन॥

---

१ A D लौल्यादिगुणाः

२ A जने प्रि०

३ A प वृप्ति

४ C omits the quotation

५ A D omit.

अमुमेवार्थं स्पष्टयन्नाह ।

अस्यां तु धर्ममाहात्म्यात्समाचारविशुद्धित ।
प्रियो भवति भूतानां धर्मैकाग्रमनास्तथा ॥१६१॥

अस्यामेव दृष्टौ कान्ताया नियोगेन धर्ममाहात्म्यात्कारणात्समाचारविशुद्धितो हेतो । किमित्याह " प्रियो भवति भूताना " प्राणिना[1] " धर्मकाग्रमनास्तथा " भवतीति ॥

एतदेवाह ।

श्रुतधर्मे मनो नित्य कायस्तस्यान्यचेष्टिते ।
अतस्त्वाक्षेपकज्ञानान्न भोगा भवहेतव ॥१६२॥

श्रुतधर्मे आगमे मनो नित्य तद्भावनोपपत्ते कायस्तु काय एवास्याधिकृतदृष्टिमतोऽन्यचेष्टिते सामान्येऽतस्त्वत एव कारणात् । आक्षेपकज्ञानात्सम्यगाक्षेपकज्ञानेन हेतुभूतेन भोगा इन्द्रियार्थसंबन्धा भवहेतव' संसारहेतवो न इति ॥

अमुमेवार्थं दृष्टान्तमधिकृत्याह—

मायाम्भस्तत्त्वत पश्यन्ननुद्विग्नस्ततो द्रुतम् ।
तन्म येन प्रयात्येव यथा व्याघातवर्जित ॥ १६३ ॥

मायाम्भस्तत्त्वत पश्यन मायाम्भस्त्वेनैवानुद्विग्नस्ततो मायाम्भस्तो द्रुत शीघ्र तन्मध्येन मायाम्भोमध्येन प्रयात्येव । " यथा " इत्युदाहरणोपन्यासार्थं । व्याघातवर्जितो मायाम्भसस्तत्त्वेन व्याघातासमर्थत्वादिति ॥

---

१ A. omits.

भोगान्स्वरूपतः पश्यंस्तथा मायोदकोपमान् ।
भुञ्जानोऽपि ह्यसङ्गः सन् प्रयात्येव परं पदम् ॥१६४॥

भोगानिन्द्रियार्थसंबन्धान्स्वरूपतः पश्यन्समारोपमन्तरेण तथा तेनैव प्रकारेण मायोदकोपमानसारान् भुञ्जानोऽपि हि कर्माक्षिप्तान-सङ्गः सन् प्रयात्येव परं पदं,[1] अनभिष्वङ्गतया परवशाभावात्[2] ॥

भोगतत्त्वस्य तु पुनर्न भवोदधिलङ्घनम् ।
मायोदकदृढावेशस्तेन यातीह कः पथा ॥ १६५ ॥

भोगतत्त्वस्य तु भोगपरमार्थस्य पुनर्न भवोदधिलङ्घनं तथा-बुद्धेस्तदुपायेऽप्रवृत्तेः । आह च "मायोदकदृढावेशः" तथाविपर्या-सात् "तेन यातीह कः पथा" यत्र मायायामुदकबुद्धिः ॥

स तत्रैव भवोद्विग्नो यथा तिष्ठत्यसंशयम् ।
मोक्षमार्गेऽपि हि तथा भोगजम्बालमोहितः ॥१६६॥

स मायायामुदकदृढावेशस्तत्रैव पथि भवोद्विग्नः सन् । "यथा" इत्युदाहरणोपन्यासार्थः । तिष्ठत्यसंशयं तिष्ठत्येव जलबुद्धिसमावे-शात् । मोक्षमार्गेऽपि हि ज्ञानादिलक्षणे तथा तिष्ठत्यसंशयं भोगनि-बन्धनदेहादिप्रपञ्चमोहित इत्यर्थः ॥

मीमांसाभावतो नित्यं न मोहोऽस्यां यतो भवेत् ।
अतस्तत्त्वसमावेशात्सदैव हि हितोदयः ॥१६७॥

मीमांसाभावतः सद्विचारभावेन नित्यं सर्वकालं न मोहोऽस्यां

---

१ B adds तथा

२ C ०वशभावात्

दृष्टौ यतो भवेत् । अतस्तत्त्वसमावेशात्कारणात्सदैव हितोदयोऽस्या दृष्टाविति ॥

प्रतिपादिता षष्ठी दृष्टिः । साम्प्रत सप्तम्युच्यते ।

ध्यानप्रियाप्रभावेन¹नास्यां रुगत एव हि ।
तत्त्वप्रतिपत्तियुता विशेषेण शमान्विता² ॥१६८॥

एव सत्प्रवृत्तिपदावहेति पिण्डार्थः ॥

ध्यानज सुखमस्या तु जितमन्मथसाधनम् ।
विवेकबलनिर्जातं शमसारं सदैव हि ॥ १६९ ॥

ध्यानज सुखमस्या त्वधिकृतदृष्टावेव । किंविशिष्टमित्याह "जितमन्मथसाधन" व्युदस्तशब्दादिविषयम् । एतदेव विशेष्यते "विवेकबलनिर्जात" ध्यानसामर्थ्योत्पन्नम् । अत एव "शमसार सदैव हि" विवेकस्य शमफलत्वादिति ।

किं च ।

सर्वं परवशं दुःख सर्वमात्मवशं सुखम् ।
एतदुक्त समासेन लक्षण सुखदुःखयोः ॥ १७० ॥

सर्वं परवश दुःख तल्लक्षणयोगात्सर्वमात्मवश सुखमत एव हेतो । एतदुक्त मुनिना समासेन सक्षेपेण लक्षण स्वरूप सुखदुःखयोरिति ॥

पुण्यापेक्षमपि ह्येवं सुख परवशं स्थितम् ।

---

¹ B ध्यानप्रिया प्रभा प्रायो C ध्यानप्रिया प्रभा यो
² BC omit

ततश्च दुःखमेवैतत्तल्लक्षणनियोगतः[1] ॥ १७१ ॥

पुण्यापेक्षमपि ह्येवमुक्तनीत्या सुखं परवशं स्थितं पुण्यस्य परत्वात् । ततश्च दुःखमेवैतत्तल्लक्षणनियोगात्तदित्थं ध्यानजं तात्त्विकं सुखमपरायत्तत्वात्कर्मवियोगमात्रजत्वादिति ॥

ध्यानं च निर्मले बोधे सदैव हि महात्मनाम् ।
क्षीणप्रायमलं हेम सदा कल्याणमेव हि ॥१७२॥

ध्यानं च निर्मले बोधे स्पष्टक्षयोपशमसमुत्थे सति । किमित्याह "सदैव हि महात्मनां" मुनीनाम् । एतदेव प्रतिवस्तूपमयाह " क्षीणप्रायमलं हेम " स्वर्णं " सदा कल्याणमेव हि" तथावस्थोपपत्तेः ॥

सत्प्रवृत्तिपदं चेहासङ्गानुष्ठानसंज्ञितम् ।
महापथप्रयाणं यदनागामिपदावहम् ॥ १७३ ॥

सत्प्रवृत्तिपदं चेह तत्त्वमार्गे । किमित्याह " असङ्गानुष्ठानसंज्ञितं " वर्तते । तथा स्वरसप्रवृत्तेः । महापथं प्रयाणं यदसङ्गानुष्ठानम् । अनागामिपदावहं नित्यपदप्रापकमित्यर्थः ॥

अस्य नामान्याह ।

प्रशान्तवाहितासंज्ञं विसभागपरिक्षयः ।
शिववर्त्म ध्रुवाध्वेति योगिभिर्गीयते ह्यदः ॥१७४॥

प्रशान्तवाहितासंज्ञं सांख्यानां, विसभागपरिक्षयो बौद्धानां, शिववर्त्म शैवानां, ध्रुवाध्वा महाव्रतिकानामित्येवं योगिभिर्गीयते ह्यदोऽसङ्गानुष्ठानमिति ॥

एतत्प्रसाधयत्याशु यद्योगयस्यां व्यवस्थितः ।

---

१ C दुःखमेवैतद्ध्यानजं तात्त्विकं सुखम् ॥

एतत्पदावहैपैव तत्तत्रैतद्विदा मता ॥ १७५ ॥

एतदसङ्गानुष्ठान प्रसाधयत्याशु शीघ्र यदोग्यस्या दृष्टौ व्यवस्थित सन् । एतत्पदावहैपैव दृष्टिस्तत्तत्रैतद्विदा मतेष्टेति ॥

उक्ता सप्तमी दृष्टिः । अधुनानन्तरोच्यते । तदाह ।

समाधिनिष्ठा तु परा तदासङ्गविवर्जिता ।
सात्मीकृतप्रवृत्तिश्च तदुत्तीर्णाशयेति च ॥ १७६ ॥

समाधिनिष्ठा तु पराष्टमी दृष्टि. समाधिस्तु ध्यानविशेष' फलमित्यन्ये । यथोक्त "देशबन्धश्चित्तस्य धारणा" (३–१ पा) " तत्र प्रत्ययैकतानता ध्यान" (३–२ पा) " तदेवार्थमात्रनिर्भास स्वरूपशून्यमिव समाधि' " (३–३ पा) इति ॥ तदासङ्गविवर्जिता समाध्यासङ्गविवर्जिता भूलमप्रवृत्तिश्चैषा चन्दनगन्धन्यायेन । तदुत्तीर्णाशयेति वासचित्ताभावेन ॥

निराचारपदो ह्यस्यामतिचारविवर्जित ।
आरूढारोहणाभावगतिवत्त्वस्य चेष्टितम् ॥ १७७ ॥

निराचारपद एवास्या दृष्टौ योगी भवति प्रतिक्रमणाद्यभावात् । अतिचारविवर्जितस्तन्निबन्धनाभावेन । आरूढारोहणाभावगतिवत्त्वस्य योगिनश्चेष्टित भवति, आचारजेयकर्माभावात्, निराचारपद इत्यर्थ ॥

अथ भिक्षाटनाद्याचारोऽस्येत्याशङ्कापनोदायाह ।

रत्नादिशिक्षादृग्भ्योऽन्या यथा दृक्तन्नियोजने ।
तथाचारक्रियाप्यस्य सैवान्या फलभेदत ॥ १७८ ॥

रत्नादिशिक्षादृग्भ्य सकाशादन्या भिन्नेव यथा दृक्तन्नियोजने

रत्नादिनियोजने शिक्षितस्य सतः । तथाचारन्नियाप्यस्य योगिनः सैव भिक्षाटनादिलक्षणान्या भवति । कुत इत्याह " फलभेदतः " प्राक् सांपरायिककर्मक्षयः फलं, इदानीं तु भवोपग्राहिकर्मक्षय इति ॥

**तन्नियोगान्महात्मेह कृतकृत्यो यथा भवेत् ।**
**तथायं धर्मसंन्यासविनियोगान्महामुनिः ॥ १७९ ॥**

तन्नियोगाद्रत्ननियोगान्महात्मेह लोके कृतकृत्यो यथा भवेत्कश्चिद्रत्नवणिक् । तथायमधिकृतयोगी धर्मसंन्यासविनियोगात्सकाशान्महामुनिः कृतकृत्यो भवतीति ॥

तथा ।

**द्वितीयाऽपूर्वकरणे मुख्योऽयमुपजायते ।**
**केवलश्रीस्ततश्चास्य निःसपत्ना सदोदया ॥१८०॥**

द्वितीयाऽपूर्वकरणे श्रेणिवर्तिनि मुख्योऽयं धर्मसंन्यास उपजायत उपचरितस्तु प्रमत्तसंयतादारभ्य, केवलश्रीस्ततश्च धर्मसंन्यासविनियोगादस्य योगिनो निःसपत्ना केवलश्रीः सदोदया प्रतिपाताभावेन ॥

सिंहावलोकितनीत्याधिकृतवस्तुनिर्धारणायाह ।

**स्थितः शीतांशुवज्जीवः प्रकृत्या भावशुद्धया ।**
**चन्द्रिकावच्च विज्ञानं तदावरणमभ्रवत् ॥ १८१ ॥**

स्थितो न स्थापनीयः, शीतांशुवच्चन्द्रवज्जीव आत्मा प्रकृत्यात्मीयया भावशुद्ध्या तत्त्वशुद्ध्येत्यर्थः । तथा वा चन्द्रिकावच्च ज्योत्स्नावच्च विज्ञानं केवलाद्युपमामात्रमेतत्तदावरणं ज्ञानावरणमभ्रवन्मेघपटलवदित्यर्थः ॥

प्रकृतयोजनमाह ।

घातिकर्माभ्रकल्पं तदुक्तयोगानिलाहते ।
यदापैति तदा श्रीमान् जायते ज्ञानकेवली ॥१८२॥

घातिकर्म ज्ञानावरणीयादि । तथा । ज्ञानावरणीय, दर्शनावरणीय, मोहनीय, अन्तराय चेति । एतदभ्रकल्पं वर्तते तद्घातिकर्मोक्तयोगानिलाहतेरनन्तरोदितयोगवायुघातादित्यर्थः । यदापैति श्रेणिपरिसमाप्तौ तदा श्रीमानसौ मुख्यविक्रमयोगेन जायते ज्ञानकेवली सर्वज्ञ इत्यर्थः ॥

अत एवाह ।

क्षीणदोषो ऽथ सर्वज्ञः सर्वलब्धिफलान्वितः ।
परं परार्थं सपाद्य ततो योगान्तमश्नुते ॥ १८३ ॥

क्षीणदोषः सकलरागादिपरिक्षयेण । अथ तदैव । सर्वज्ञो निरावरणज्ञानभावेन सर्वज्ञ इत्यर्थः.[1] । सर्वलब्धिफलान्वितः सर्वौत्सुक्यनिवृत्त्या । परं परार्थं सपाद्य यथाभव्यं सम्यक्त्वादिलक्षणम् । ततो योगान्तमश्नुते योगपर्यन्तमाप्नोति ।

तत्र द्रागेव भगवानयोगाद्योगसत्तमात् ।
भवव्याधिक्षयं कृत्वा निर्वाणं लभते परम् ॥ ८४ ॥

तत्र योगान्ते शैलेश्यवस्थायां द्रागेव[2] शीघ्रमेव ह्रस्वपञ्चाक्षरोद्गिरणमात्रेण कालेन भगवानसावयोगाद्व्यापाराद्योगसत्तमाद्योगप्रधानात्, शैलेशीयोगादित्यर्थः । किमित्याह "भवव्याधिक्षयं कृत्वा"

---

1 C omits सर्वज्ञ इत्यर्थः

2 C प्रागेव.

सर्वप्रकारेण[1] " निर्वाणं लभते परं " भावनिर्वाणमित्यर्थः ॥

तत्रायं कीदृश इत्याह ।

**व्याधिमुक्तः पुमान् लोके यादृशस्तादृशो ह्ययम् ।**
**नाभावो न च नो मुक्तो व्याधिनाव्याधितो न च ।१८५।**

व्याधिमुक्तो व्याधिपरिक्षीणः[2] पुमान् यादृशो भवतीति तादृशो ह्ययं निर्वृतो नाभावः नष्यातदीपकल्पोपमो न च नो मुक्तो व्याधिना मुक्त एव भव्यत्वपरिक्षयेणाव्याधितो न च पूर्वं तथातद्भावादिति ॥

अमुमेवार्थं स्पष्टयन्नाह ।

**भव एव महाव्याधिर्जन्ममृत्युविकारवान् ।**
**विचित्रमोहजननस्तीव्ररागादिवेदनः ॥ ८६ ॥**

भवः संसार एव महाव्याधिः[3] । किंविशिष्ट इत्याह "जन्ममृत्युविकारवान् " जराद्युपलक्षणमेतत् । विचित्रमोहजननो मिथ्यात्वोदयभावेन तीव्ररागादिवेदनः स्त्र्याद्यभिष्वङ्गभावेन ॥

**मुख्योऽयमात्मनो ऽनादिचित्रकर्मनिदानजः ।**
**तथानुभवसिद्धत्वात्सर्वप्राणभृतामिति ॥ १८७ ॥**

मुख्यो निरुपचारितोऽयं भवव्याधिरात्मनो जीवस्य । किंभूत इत्याह " अनादिचित्रकर्मनिदानजः " द्रव्यभावभेदभिन्नकर्मबलोत्पन्न इत्यर्थः । कुत इत्याह " तथानुभवसिद्धत्वात् " जन्माद्यनुभवेन " सर्वप्राणभृतामिति " तिर्यक्प्रभृतीनामपि ॥

---

१ C सर्वाकारेण.

२ B C omit व्याधि.

३ B ( marginal addition ) मिथ्यात्वोदयभावेन.

एतन्मुक्तश्च मुक्तोऽपि मुख्य एवोपपद्यते ।
जन्मादिदोषविगमात्तद्दोषत्वसंगते ॥ १८८ ॥

एतेन भवव्याधिना मुक्तश्च मुक्तो ऽपि सिद्ध॰ । मुख्य एवोपपद्यते प्रवृत्तिनिमित्तभावात् । तथा चाह " जन्मादिदोषविगमात् " कारणात्तद्दोषत्वसंगतेस्तस्य दोषवतो ऽदोषत्वनाप्तेरिति ॥

अमुमेवार्थं स्पष्टयन्नाह ।

तत्स्वभावोपमर्देऽपि तत्तत्स्वाभाव्ययोगत ।
तस्यैव हि तथाभावात्तद्दोषत्वमगति ॥ १८९ ॥

तस्यात्मन॰ स्वभावोपमर्देऽपि सति जन्मादिभावविगमेन तत्तत्स्वाभाव्ययोगतस्तत्तत्स्वाभाव्य[1] तेन योगात् । तथाहि तस्येत्थभूत एव स्वभावो येन स एव[2] तथा भवतीति । ततश्च तस्यैव हि तथाभावाज्जन्मादिभ्यागतो ज मात्रवीनत्वेन भावात् । किमित्याह " तद्दोषत्वमगति " दोषवत एवात्मोपत्वमाप्तिरित्यर्थ ॥

इत्य चैतदङ्गीकर्तव्यमित्याह ।

स्वभावोऽस्य स्वभावो यन्निजा सत्तैव तत्त्वत ।
भावावधिरय युक्तो नान्यथातिप्रसङ्गत ॥ १९० ॥

स्वभावोऽस्यात्मन स्वभावो यद्यस्मात् । किमुक्त भवति " निजा सत्तैव तत्त्वत " परमार्थेन । भावावधिरय युक्तः स्वभावोऽनन्तरोदित । नान्यथा युक्त । कुत इत्याह " अतिप्रसङ्गत " इति ॥

---

[1] C योगतस्तस्य तत्स्वाभाव्य

[2] A एवं

एनमेवाह ।

अनन्तरक्षणाभूतिरात्मभूतेह यस्य तु ।
तयाविरोधान्नित्योऽसौ स्यादसन्वा सदैव हि ॥१९१॥

अनन्तरक्षणाभूतिः प्राक्पश्चात्क्षणयोरभूतिरित्यर्थः । आत्मभूतेह यस्य तु वर्तमानस्य वादिनो वा । तस्य दोषमाह "तया" अनन्तरक्षणाभूत्या "अविरोधात्" कारणाद्वर्तमानभावेन । किमित्याह "नित्योऽसौ" वर्तमानः "स्यात्" तद्वत्सदातद्भावादिति । पक्षान्तरमाह "असन्वा सदैव हि" तयाविरोधेन तदूग्रस्तत्वादिति ॥

परोक्तिमात्रपरिहारायाह ।

स एव न भवत्येतदन्यथाभवतीतिवत्[1] ।
विरुद्धं तन्नयादेव तदुत्पत्त्यादितस्तथा ॥ १९२ ॥

"स एव" इति भावपरामर्शः । न भवतीति चाभावाभिधानमेतत् । किमित्याह "अन्यथाभवतीतिवत्" इति निदर्शनम् । विरुद्धं व्याहतम् । तन्नयादेव स हि[2] स एवान्यथाभवतीत्युक्ते । एवमाह । कथमन्यथा भवति; अन्यथा चेद्भवति कथं स इति । एतच्च स एव न भवतीत्यत्रापि समानमेव । तथाहि । यदि स एव कथं न भवति, अभवत्वात्कथं स इति विरुद्धमेतत । अभ्युच्चयमाह "तदुत्पत्त्यादितः" इत्यभावोत्पत्त्यादेः "तथा" विरुद्धमिति ॥

एतद्भावनायैवाह ।

---

१ B भवतीति च ।

२ A adds बौद्धः

मतोऽसत्त्वे तदुत्पादस्ततो नाशोऽपि तस्य यत्।
तन्नष्टस्य पुनर्भावः सदा नाशे न तत्स्थितिः ॥१९३॥

सतो भावस्यासत्त्वेऽभ्युपगम्यमाने ' स एव न भवति " इति वचनात्। किमित्याह ' तदुत्पादः " इत्यसत्त्वोत्पादः कादाचित्कत्वेन। ततः उत्पादानाशोऽपि तस्यासत्त्वस्य 'यदुत्पत्तिमत्तद् नित्य' इति कृत्वा। यस्मात्। एवं तत्तस्मान्नष्टस्यासत्त्वस्य पुनर्भावस्तेनैव रूपेण तदसत्त्वविनाशान्यथानुपपत्तेः। अथ नाशो नाशात्मना भावात्मकत्वेनागावस्थित एव। एतदाशङ्क्याह " सदा नाशे " अभ्युपगम्यमाने। किमित्याह " न तत्स्थितिः " द्वितीयक्षणेऽपि तस्थानुपपत्तेः ॥

म क्षणस्थितिधर्मा चेद् द्वितीयादिक्षणे स्थितौ।
युज्यते ह्येतदप्यस्य तथा चोक्तानतिक्रमः ॥१९४॥

स नाशः क्षणस्थितिधर्मा चेद्भाव एव। एतदाशङ्क्याह " द्वितीयादिक्षणे स्थितौ " सत्याम्। किमित्याह " युज्यते नैतदपि " क्षणस्थितिधर्मत्व " अस्य " अधिकृतभावस्य। तथा चैव सत्युक्तानतिक्रमः ॥

एतदेवाह।

क्षणस्थितौ तदैवास्य नास्थितिर्युक्त्यसङ्गतेः।
न पश्चादपि सैवेति सतोऽसत्त्वं व्यवस्थितम् ॥१९५॥

भावस्थितौ सत्यां तदैव द्वितीयक्षणे अस्य द्वितीयाभावस्यैव

' ॥ ॥
' ॥ ॥ नष्टस्य सत्त्वस्य

नास्थितिः । कुत इत्याह “ युक्त्यसंगतेः ” तदेवास्थितिविरोधादिति युक्तिः । न पश्चादपि द्वितीयक्षणे साऽस्थितिर्न युक्त्यसंगतेरेव तदावस्थितौ तदस्थितिविरोधादिति युक्तिः । इत्येवं सतोऽसत्त्वं व्यवस्थितम् । ततश्च सतोऽसत्त्वे तदुत्पाद इत्याद्यनुवर्तत एवेति ॥

नित्यपक्षमधिकृत्याह ।

**भवभावानिवृत्तावप्ययुक्ता मुक्तकल्पना ।**
**एकान्तैकस्वभावस्य न ह्यवस्थाद्वयं क्वचित् ॥ १९६ ॥**

भवभावानिवृत्तावप्येकान्तनित्यतायाम् । किमित्याह । “ अयुक्ता मुक्तकल्पना ” आत्मनः । कथमयुक्तेत्याह “ एकान्तैकस्वभावस्य ” अप्रच्युतानुत्पन्नस्थिरैकस्वभावतायाः “ न हि[1] यस्मात् ” “ अवस्थाद्वयं ” संसारिमुक्ताख्यं “ क्वचित् ” एकान्तैकस्वभावत्वविरोधात् ॥

**तदभावे च संसारी मुक्तश्चेति निरर्थकम् ।**
**तत्स्वभावोपमर्दोऽस्य नीत्या तात्त्विक इष्यताम् ॥१९७॥**

तदभावे चावस्थाद्वयाभावे च संसारी तिर्यगादिभाववान् मुक्तो भवप्रपञ्चोपरमादित्येतन्निरर्थकं शब्दमात्रमेव च । अर्थायोगादिति । तत्तथा स्वभावोपमर्दस्तदन्तरेण तदन्तरापनयनलक्षणः । अस्यात्मनः । नीत्या न्यायेन । किमित्याह “ तात्त्विक इष्यतां ” पारमार्थिको ऽभ्युपगम्यतामिति ॥

**दिदृक्षाद्यात्मभूतं तत्मुख्यमस्या निवर्तते ।**
**प्रधानादिनतेर्हेतुस्तदभावान्न तन्नतिः ॥ १९८ ॥**

---

1 C omits

दिदृक्षा विद्यामलभवाधिकाराद्यात्मभूत सहज वस्तुसत् । तत्त-स्मान्मुख्यमनुपचरितमेवास्यात्मनोऽनिवर्तत इति । किंभूत[1] तदित्याह " प्रधानादिनते॰ " प्रधाननयादिपरिणते॰[2] " हेतुः " कारणम् । तदभावाद्दिदृक्षाद्यभावान्न तन्नतिन[3] प्रधानादिपरिणतिर्मुक्तात्मन इति ॥

अन्यथा स्यादिय नित्यमेषा च भव उच्यते ।
एवं च भवनित्यत्वे कथ मुक्तस्य सभव ॥ १९९ ॥

इत्थ चैतदङ्गीकर्तव्य, अन्यथैवमनभ्युपगम्यमाने स्यादिय प्रधा नादिनतिर्नित्य सदैव । तत' किमित्याह " एषा च " प्रधानादिनतिः " भव उच्यते " समारोऽभिधीयते एतन्नतो तदात्मकमहदादिभा-वात् । एव चोक्तनीत्या भवनित्यत्वे सति कथ मुक्तस्य सभवः ? । नैवेत्यर्थ ॥

अवस्था तत्त्वतो नो चेन्ननु तत्प्रत्यय कथम् ।
भ्रान्तोऽय किमनेनेति मानमत्र न विद्यते ॥ २०० ॥

अवस्था तत्त्वत परमार्थेन नो चेत्पूर्वापरभावेन । तदाशङ्क्याह " ननु तत्प्रत्यय " अवस्थाप्रत्यय ' कथ " निबन्धनाभावेन । स्यादेतत् । तद्भ्रान्तो ऽयमवस्थाप्रत्यय । तत्किमनेनेत्येतदाशङ्क्याह " मानमत्र " भ्रान्ततायां " न विद्यते " ॥

योगिज्ञान तु मान चेत्तदवस्थान्तरं तु तत् ।
तत कि भ्रान्तमेतस्यादन्यथा सिद्धसाध्यता ॥२०१॥

---

१ A कथभूत

२ A D omit नत

३ B omits

योगिज्ञानं[1] तु[1] योगिज्ञानमेव प्रमाणं चेदत्र । एतदाशंक्याह "तदवस्थान्तरं तु" योग्यवस्थान्तरमेव "तत्" योगिज्ञानम् । ततः किमित्येतदाशंक्याह "भ्रान्तमेतत्स्यात्" योगिज्ञानं, "अन्यथा" अभ्रान्तत्वे ऽस्य । किमित्याह "सिद्धसाध्यता" अवस्थाभेदोपपत्तेरिति ॥

उक्तमानुषङ्गिकं प्रकृतं प्रस्तुमः । तच्च "सिद्धस्वरूपव्याधिमुक्तः पुमान् लोके" इत्याद्युपन्यासात् । तत्र ।

व्याधितस्तदभावो वा तदन्यो वा यथैव हि ।
व्याधिमुक्तो न सन्नीत्या कदाचिदुपपद्यते ॥ २०२ ॥

व्याधितः संजातव्याधिरेव, तदभावो वा तदन्यो वा व्याधितान्यो वा तत्पुत्रादिर्यथैव हि व्याधिमुक्तो न त्रयाणामेकोऽपि सन्नीत्या सन्न्यायेन कदाचिदुपपद्यत इति दृष्टान्तः ॥

दार्ष्टान्तिकयोजनमाह ।

संसारी तदभावो वा तदन्यो वा तथैव हि ।
मुक्तोऽपि हन्त नो मुक्तो मुख्यवृत्त्येति तद्विदः ॥२०३॥

संसारी पुरुषः । तदभावो वा[2] पुरुषाभावमात्रमेव । तदन्यो वैकान्तलक्षणः । तथैव हि यथा दृष्टान्ते । किमित्याह "मुक्तो ऽपि हन्त नो मुक्तो मुख्यवृत्त्या" त्रयाणामपि तत्प्रवृत्तिनिमित्ताभावात् "इति तद्विदः" मुक्तविद इत्थमभिदधतीति ॥

कथं तर्हि मुक्तव्यवस्थेत्याह ।

---

१ B omits

२ A adds संसारी

क्षीणव्याधिर्यथा लोके व्याधिमुक्त इति स्थित ।
भवरोग्येव तु तथा मुक्तस्तन्त्रेषु तत्क्षयात् ॥२०४॥

क्षीणव्याधि पुरुष । यथा लोकेऽविगानेन व्याधिमुक्त इति तत्तन्भावेन स्थितो न स्थापनीयः । भवरोग्येव न मुख्यतद्भावेन तथा,व्याधिमुक्तस्तन्त्रेषु स्थित । तत्क्षयादिति भवरोगक्षयादित्यर्थः ॥

एव प्रकृतमभिधाय[1] सर्वोपसहारमाह ।

अनेकयोगशास्त्रेभ्य संक्षेपेण समुद्धृत ।
दृष्टिभेदेन योगोऽयमात्मानुस्मृतये पर ॥ २०५ ॥

अनेकयोगशास्त्रेभ्य पातञ्जलादिभ्य सक्षेपेण समासेन समुद्धृतस्तेभ्य पृथक्कृत, नवनीतमिव क्षीरादिति । केन क इत्याह "दृष्टिभेदेन" उक्तलक्षणेन "योगोऽय" अधिकृत एव । किमर्थमित्याह । आत्मानुस्मृत्यर्थं पर प्रधानो योग इति ॥

प्रयोजनान्तरमप्याह ।

कुलादियोगभेदेन चतुर्धा योगिनो यत ।
अत परोपकारोऽपि लेशतो न विरुध्यते ॥ २०६ ॥

कुलादियोगभेदेन गोत्रकुलप्रवृत्तचक्रनिष्पन्नयोगलक्षणेन चतुर्धा चतुःप्रकारा योगिनो यत सामान्येन । अत किमित्याह "परोपकारोऽपि" तथाविधकुलादियोग्यपेक्षया "लेशतो न विरुध्यते" मनागतोऽपि योगपक्षपातादिति भावात् ॥

तत्र ।

---

१ B प्रस्तुत०

कुलप्रवृत्तचक्रा ये त एवास्याधिकारिणः ।
योगिनो न तु सर्वेऽपि तथा सिद्ध्यादिभावतः ॥२०७॥

कुलप्रवृत्तचक्रा ये कुलयोगिनः प्रवृत्तचक्राश्च य इत्यर्थः । एते चास्य योगशास्त्रस्याधिकारिणोऽर्हा योगिनो न तु सर्वेऽपि सामान्येन । कुत इत्याह " तथा " तेन प्रकारेण " सिद्ध्यादिभावतः " गोत्रयोगिनामसिद्धिभावात्, आदिशब्दात्तु निष्पन्नयोगिनां तु सिद्धिभावादिति ॥

एतद्विशेषलक्षणमाह ।

ये योगिनां कुले जातास्तद्धर्मानुगताश्च ये ।
कुलयोगिन उच्यन्ते गोत्रवन्तोऽपि नापरे ॥ २०८ ॥

ये योगिनां कुले जाता जन्मनैव तद्धर्ममुपगताश्च योगिधर्मानुगताश्च ये प्रकृत्यान्येऽपि । " कुलयोगिन उच्यन्ते " इति गम्यते । द्रव्यतो भावतश्च गोत्रवन्तोऽपि सामान्येन भूमिभव्या अपि नापरे कुलयोगिन इति ॥

एतद्विशेषलक्षणमधिकृत्याह ।

सर्वत्राद्वेषिणश्चैते गुरुदेवद्विजप्रियाः ।
दयालवो विनीताश्च बोधवन्तो यतेन्द्रियाः ॥ २०९॥

सर्वत्राद्वेषिणश्चैते तथा ग्रहाभावेन तथा गुरुदेवद्विजप्रिया धर्मप्रभावात् । तथा दयालवः प्रकृत्या क्लिष्टपापाभावेन विनीताश्च कुशलानुबन्धिभव्यतया । तथा बोधवन्तो ग्रन्थिभेदेन यतेन्द्रियाश्चारित्रभावेन॥

प्रवृत्तचक्रास्तु पुनर्यमद्वयसमाश्रयाः ।
शेषद्वयार्थिनोऽत्यन्तं शुश्रूषादिगुणान्विताः ॥ २१० ॥

मदनचक्रास्तु पुनः किंविशिष्टा भवन्तीत्याह " यमद्वयसमाश्रयाः " इच्छायमप्रवृत्तियमाश्रया इत्यर्थः " शेषद्वयार्थिनः " स्थिरयमसिद्धियमद्वयार्थिन इत्युक्तं भवति । अत्यन्तं सदुपायप्रवृत्त्येति । अत एवाह " शुश्रूषादिगुणान्विताः " शुश्रूषाश्रवणग्रहणधारणविज्ञानेहापोहतत्त्वाभिनिवेशगुणयुक्ताः ॥

तथा ।

आद्यावञ्चकयोगाप्त्या तदन्यद्वयलाभिनः ।
एतेऽधिकारिणो योगप्रयोगस्येति तद्विदः ॥ २११ ॥

आद्यावञ्चकयोगाप्त्या हेतुभूतया तदन्यद्वयलाभिनः क्रियावञ्चकफलावञ्चकद्वयलाभिनः, तदन्यत्र भद्रतयैवमभूताः । किमित्याह[1] " अधिकारिणः " । कस्येत्याह । योगप्रयोगस्याधिकृतस्यैवेत्येव तद्विदो योगविदः । " अभिदधति " इति शेषः ॥

उपन्यस्तयमादिस्वरूपमाह ।

इहाहिंसादयः पञ्च सुप्रसिद्धा यमाः सताम् ।
अपरिग्रहपर्यन्तास्तथेच्छादिचतुर्विधाः ॥ २१२ ॥

इह लोके ऽहिंसादयो धर्माः पञ्च सत्यशः सुप्रसिद्धाः सर्वतन्त्रसाधारणत्वेन यमा उपरमाः प्रवृत्तियमाः स्थिरयमाः सिद्धियमाः[3] इति सतां मुनीनाम् । किंपर्यन्ता इत्याह " अपरिग्रहपर्यन्ताः " "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः" (२–३० पा) इति वचनात्।

---

[1] A omits आह

[2] C विरागिण

[3] P C omit प्रवृत्तियमाः स्थिरयमाः, सिद्धियमाः

तथेच्छादिचतुर्विधाः प्रत्येकमिच्छायमाः प्रवृत्तियमाः स्थिरयमाः सिद्धियमा इति[१] ॥

एतेषां विशेषलक्षणमाह ।

तद्वत्कथाप्रीतियुता तथाविपरिणामिनी ।
यमेष्विच्छावसेयेह प्रथमो यम एव तु ॥ २१३ ॥

तद्वत्कथाप्रीतियुता यमवत्कथाप्रीतियुता । तथाविपरिणामिनी तद्भावस्थिरत्वेन । यमेषूक्तलक्षणेषु । इच्छा अवसेयेह यमचक्रे । इयं च प्रथमो यम[२] एव तु, अनन्तरोदितलक्षणेच्छैवेच्छायम इति कृत्वा ॥

तथा ।

सर्वत्र शमसारं तु यमपालनमेव यत् ।
प्रवृत्तिरिह विज्ञेया द्वितीयो यम एव तत्[३] ॥ २१४ ॥

सर्वत्र सामान्येन शमसारं तूपशमसारमेव यत्क्रियाविशिष्टं यमपालनं[४] प्रवृत्तिरिह विज्ञेया यमेषु द्वितीयो यम एव तत्प्रवृत्तियम इत्यर्थः ॥

विपक्षचिन्तारहितं यमपालनमेव यत् ।
तत्स्थैर्यमिह विज्ञेयं तृतीयो यम एव हि ॥ २१५ ॥

---

१ A omits from किंपर्यन्ता, D omits इच्छायमाः इति ॥

२ C यत

३ D तु

४ B C omit

विपश्चिन्तारहितमतिचारादिचिन्तारहितमित्यर्थः । यमपालन-मेव यद्विशिष्टक्षयोपशमवृत्त्या । तत्स्थैर्यमिह विनेय यमेषु । एतच्च तृतीयो यम एव हि स्थिरयम इति योऽर्थः ॥

परार्थसाधकं त्वेतत्सिद्धिः शुद्धान्तरात्मनः ।
अचिन्त्यशक्तियोगेन चतुर्थो यम एव तु ॥२१६॥

परार्थसाधकं त्वेतद्यमपालनं सिद्धिरभिधीयते । एतच्च शुद्धान्तरात्मनो नान्यस्य । अचिन्त्यशक्तियोगेन तत्संनिधौ वैरत्यागात् । इत एतच्चतुर्थो यम एव तु सिद्धियम इति भावः ॥

अवञ्चकत्रयमुपपादयन्नाह ।

सद्भिः कल्याणसम्पन्नैर्दर्शनादपि पावनैः ।
तथादर्शनतो योग आद्यावञ्चक उच्यते ॥ २१७ ॥

सद्भिः कल्याणसम्पन्नैर्विशिष्टपुण्यवद्भिः । दर्शनादपि पावनैरवलोकनेनापि पवित्रैः । तथा तेन प्रकारेण गुणवत्तया विपर्ययाभावेन दर्शनं तथादर्शनम् । ततस्तेन यो योगः सम्बन्धस्तैः सह स आद्याव-ञ्चक उच्यते सद्योगावञ्चक इत्यर्थः ॥

तेषामेव प्रणामादिक्रियानियम इत्यलम् ।
क्रियावञ्चकयोगः स्यान्महापापक्षयोदयः ॥ २१८ ॥

तेषामेव सतां प्रणामादिक्रियानियम इत्यलम् । क्रियावञ्चक-योगः स्यादित्ययमिति । अयं च महापापक्षयोदयो नीचैर्गोत्रकर्मक्षय इति भावः ॥

---

१ । अतिनसिद्धियोगेन

फलावञ्चकयोगस्तु सद्भ्य एव नियोगतः ।
सानुबन्धफलावाप्तिर्धर्मसिद्धौ सतां मता ॥ २१९ ॥

फलावञ्चकयोगस्तु चरमो योगोत्तमः । किंभूत इत्याह " सद्भ्य एव " अनन्तरोदितेभ्यः " नियोगतः " अवश्यंतया " सानुबन्धफलावाप्तिः " तथा सदुपदेशादिना " धर्मसिद्धौ " विषये " सतां मता " इति ॥

एवमेतेषां स्वरूपमभिधाय प्रकृतयोजनमाह ।

कुलादियोगिनामस्मान्मत्तोऽपि[1] जडधीमताम् ।
श्रवणात्पक्षपातादेरुपकारोऽस्ति लेशतः ॥ २२० ॥

कुलादियोगिनामुक्तलक्षणानामस्माद्योगदृष्टिसमुच्चयान्मत्तोऽपि सकाशाज्जडधीमतामन्येषाम् । किमित्याह " श्रवणात् " श्रवणेन " पक्षपातादेः " पक्षपातशुभेच्छादेः " उपकारोऽस्ति लेशतः " तथा बीजपुष्टा ॥

कः पक्षपातमात्रादुपकार इत्याशङ्कापोहायाह ।

तात्त्विकः पक्षपातश्च भावशून्या च या क्रिया ।
अनयोरन्तरं ज्ञेयं भानुखद्योतयोरिव ॥ २२१ ॥

तात्त्विकः पक्षपातश्च परमार्थिक इत्यर्थः । भावशून्या प्रतिक्रिय (इतिक!) योरिवेत्याह " भानुखद्योतयोरिव " महदन्तरमित्यर्थः ॥

तथा चाह ।

खद्योतकस्य यत्तेजस्तदल्पं च विनाशि च ।

---

1 A omit.

विपरीतमिदं भानोरिति भाव्यमिद बुधैः ॥२२२॥

खद्योतकस्य सत्त्वविशेषस्य यत्तेजः प्रकाशात्मकम् । तत्किमित्याह " अल्प च विनाशि च " स्वरूपेण[१] । विपरीतमिदं भानोर्बहविनाशि त्वादित्यस्येति । इत्येवभात्र भाव्यमिदमधिकृतपक्षपातादेतत्क्रियादिकं बुधैस्तत्त्वनीत्येति ॥

विशेषमाह ।

श्रवणे प्रार्थनीयाः स्युर्न हि योग्याः कदाचन ।
यत्नः कल्याणसत्त्वानां महारत्ने स्थितो यतः ॥२२३॥

श्रवणे श्रवणविषये प्रार्थनीयाः स्युर्भवेयुः । न हि योग्याः कदाचन, शुश्रूषाभावेन स्वतः प्रवृत्तेः । तथा चाह " यत्नः कल्याणसत्त्वाना " पुण्यवतां " महारत्ने " चिन्तामण्यादिविषयः " स्थितो यतः " तथौचित्ययोगेन, पक्षपातादेरपि जन्मान्तरावाप्तिश्रुतेः ॥

अयोग्यदानदोषपरिहारायाह ।

नैतद्विदस्त्वयोग्येभ्यो ददत्येन तथापि तु ।
हरिभद्र इद प्राह नैतेभ्यो देय आदरात् ॥ २२४ ॥

नैतद्विदस्त्वाचार्या अयोग्येभ्योऽन्येभ्यो ददति यन्दन्त्येन योगदृष्टिसमुच्चयाख्य ग्रन्थम् । तथापि त्वेवमपि व्यवस्थिते । हरिभद्रो ग्रन्थकृदिद प्राह । किमित्याह " नैतेभ्यः " अयोग्येभ्यः "देय." अय योगदृष्टिसमुच्चय " आदरात " आदरेण इद प्राह ॥

किमेतदेवमित्याह ।

---

१ A अरूपेण

अवज्ञेह कृताल्पापि यदनर्थाय जायते ।
[1]अतस्तत्परिहारार्थं न पुनर्भावदोषतः ॥ २२५ ॥

अवज्ञेह योगदृष्टिसमुच्चयाख्ये ग्रन्थे कृताल्पापि स्वरूपेण । यद्य-स्मात् । अनर्थाय जायते महाविपर्ययत्वेन । अतस्तत्परिहारार्थं न पुनर्भावदोषतः क्षुद्रतया हरिभद्र इदं प्राहेति ॥

इत्थं चैतदङ्गीकर्तव्यम् । यत एवाह ।

योग्येभ्यस्तु प्रयत्नेन देयोऽयं विधिनान्वितैः ।
मात्सर्यविरहेणोच्चैः श्रेयोविघ्नप्रशान्तये ॥ २२६ ॥

योग्येभ्यस्तु श्रोतृभ्यः प्रयत्नेनोपयोगसारेण देयोऽयं विधिना श्रवणादिगोचरेणान्वितैर्युक्तैः, दोषोऽन्यथा प्रत्यवायसंभवादित्याचार्याः। मात्सर्यविरहेण मात्सर्याभावेनोच्चैः श्रेयोविघ्नप्रशान्तये पुण्यान्तरायप्रशान्त्यर्थमिति ॥

---

समाप्तोऽयं योगदृष्टिसमुच्चयः

---

कृतिः श्रीश्वेतभिक्षोराचार्यश्रीहरिभद्रस्येति ॥

---

[1] A omits from here down to जायते in the commentary.